# द्रव्यगुणः ।

महामहोपाध्याय श्रीचक्रपाणिदत्तविरचितः

श्रीशिवदाससेनकृतटीकया समलङ्कृतः ।

---


पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।


---


द्वितीय संस्करणम् ।

---

कलिकातानगर्य्याम् ।

सिद्धेश्वरयन्त्रे

मुद्रितः ।

---

इं १८९७ ।

# द्रव्यगुणः ।

महामहोपाध्याय श्रीचक्रपाणिदत्तविरचितः

श्रीशिवदाससेनकृतटीकया समलङ्कृतः ।

पण्डितकुलपतिना,

वि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।

द्वितीय संस्करणम् ।


कलिकातानगर्य्याम् ।

सिद्धेश्वरयन्त्रे

मुद्रितः ।

इं १८८७ ।

# द्रव्यगुणः ।



प्रायः पृच्छन्ति यत्वेशास्तद्द्रव्यगुणसंग्रहः ।
धारणस्मरणोन्मुखो यथा स्याल्लिख्यते तथा ॥१॥

दशाननादितिमिरपरिभूतमिदं जगत् ।
प्रससाद यतस्तस्मै कस्मैचिन्महसे नमः ॥
काणादसांख्यायुर्वेदतन्त्राणां पारदृश्वनः ।
तातस्यानन्तसेनस्य वन्दे चरणपङ्कजम् ॥
महदादिनिकायोऽयं यस्याः प्रादुरभूत् किल ।
सतीं गुणमयीं भक्त्या भैरवीं जननीं भजे ॥
रचितश्चक्रदत्तेन यो द्रव्यगुणसंग्रहः ।
श्रीमता शिवदासेन तस्य व्याख्याभिधीयते ॥
नोक्ताश्चक्रेण ये द्रव्यगुणा विस्तरभीरुणा ।
तेऽपि प्रसङ्गतो लेख्याः शिष्यव्युत्पत्तये मया ॥

अनिबद्धस्यापि इष्टदेवतानमस्कारस्य विघ्नवारणसमर्थत्वात् तन्निबन्धनं ग्रन्थगौरवमात्रमावहतीति कृतमपि नमस्कारं ग्रन्थादौ अनिबध्य शिष्यप्रवृत्त्यङ्गतया अभिधेयसम्बन्धप्रयोजनान्येव तावदाह प्राय इत्यादि। द्रव्यगुणसंग्रह इति यद्यपि मधुरादिरसानां तथा छायातमसोश्च अद्रव्यभूतयोरपि गुणा अत्र वाच्यास्तथापि द्रव्यपदं छत्रिणो गच्छन्तीति न्यायेन समर्थनीयम्। किं वा द्रव्याणि गुणाश्च द्रव्यगुणास्तेषां संग्रहः संक्षेपेण तद्धर्मप्रतिपादकं वचनम्। अस्मिन् पक्षेऽपि छायातमसोर्द्रव्यत्वं

मीमांसकमतमाश्रित्य समर्थनीयं सर्वपारिषदत्वात् वैद्यकशास्त्रस्य। तमस्तमालमालाभं चलतीति प्रतीयते। रूपवत्त्वात् क्रियावत्त्वात् द्रव्यन्तु दशमञ्च तत्। अन्ये तु अद्रव्यभूतानां रसादीनां ये गुणा वाच्यास्तेषामौपचारिकत्वेन अप्रधानत्वात् अत्रानुपग्रह इत्याहुः। इह च द्रव्यगुणा अभिधेयास्तैः समं ग्रन्थस्याभिधानाभिधेयलक्षणः सम्बन्धः। प्रयोजनञ्च द्रव्यगुणज्ञानम्। मुख्यप्रयोजनञ्च चिकित्सितमिति। धारणमिति शब्दतः, स्मरणमित्यर्थतः। इह यद्यपि आश्रयत्वेन द्रव्यमेव प्रधानं तथापि द्रव्यस्य स्वकार्य्यजनकत्वं प्रायो रसादिद्वारकमेवेति रसवीर्य्यविपाकगुणा एव प्रथमतो वाच्याः। तत्रापि रसाधीनत्वात् वीर्य्यस्य वीर्य्याधीनत्वाच्च विपाकस्य वीर्य्यात् पूर्वं रसो विपाकात् पूर्वञ्च वीर्य्यं निरूपणीयम्। उक्तञ्च पाको नास्ति विना वीर्य्याद् वीर्य्यं नास्ति विना रसादिति। तत्र यावद्रसस्वरूपं न ज्ञायते तावत् तद्विशेषधर्माः कथं ज्ञेया इति लक्षणतः कारणतः संख्यातश्च रसोऽभिनिरूप्यते। तत्र रससामान्यलक्षणं यदाह चरकः। रसनार्थो रस इति रसनेन्द्रियग्राह्यो योऽर्थः स रस इति लक्षणार्थः। एतच्च षसामपि रसानामनुगतं रूपादिषु व्यावृत्तत्वात् साधु लक्षणमिति चक्रः। अस्मत्पितृचरणास्तु यथाश्रुतमेतल्लक्षणं रसत्वे रसाभावे चातिव्यापकं तयोरपि रसनेन्द्रियग्राह्यत्वात्। तथा अतीन्द्रियरसे च अव्यापकम्। तस्मात् रसनेन्द्रियग्राह्यवृत्तिगुणत्वावान्तरजातिमत्त्वं रसत्वमिति लक्षणतया बोध्यमित्याहुः। ननु आप्यो रस इति सुश्रुतेनोक्तम्। तत्र विप्रतिपद्यामहे। यद्याप्यो रसस्तर्हि कथं पार्थिवद्रव्येषु रसोपलब्ध इति प्रथमा विप्रतिपत्तिः। द्वितीया तु यदि आप्य एव रसस्तर्हि अपामव्यक्तरसत्वेन मधुरादिविशेषोत्पादो नोपपद्यत इति। अथ पाञ्चभौतिकत्वमेव रसस्येति सु-

न्यस्ते तदपि नोपपद्यते। तेजोवाय्वाकाशानां नीरसत्वात् रसं प्रति कारणत्वानुपपत्तेः। अत्राहुः। यदि आप्य एव रसस्तथापि उत्तरोत्तरभूतेषु पूर्वपूर्वभूतगुणानुप्रवेशात् रसवत्त्वं पृथिव्यामप्युपपद्यते। अतएवोक्तम्। 'विष्टं ह्यपरं परेण' इति। अस्यार्थः। अपरं पूर्वं भूतं परेण भूतेनानुप्रविष्टम्। तेन शब्दगुणस्याकाशस्य वायौ अनुप्रवेशात् वायोरपि शब्दवत्त्वम्। स्पर्शगुणत्वञ्च स्वत एव। एवं वायोस्तेजसि अनुप्रवेशात् तेजः शब्दस्पर्शरूपगुणम्। तेजसोऽपि जलेऽनुप्रवेशात् जलं शब्दस्पर्शरूपरसगुणम्। एवं जलस्य च पृथिव्यामनुप्रवेशात् पृथिवी च शब्दस्पर्शरूपरसगन्धगुणा इति ज्ञेयम्। कतिधा पुरुषीयेऽप्युक्तम्।

महाभूतानि खं वायुरग्निरापः चितिस्तथा।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्‌गुणाः॥
तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे।
पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृतः॥

अस्यार्थः। तेषां खादीनां मध्ये पूर्वः खरूप एकगुणः शब्दैकगुण इत्यर्थः। परे परे उत्तरोत्तरं गुणवृद्धिरित्यर्थः। यथा खमेकगुणं वायुर्द्विगुणः अग्निस्त्रिगुण इत्यादि। ननु गुणवृद्धिमात्रमित्युक्तम्। एतावता एकगुणत्वद्विगुणत्वादिनियमो न ज्ञायते को वा गुणः कुत्र भूते इत्यत आह पूर्व इत्यादि। खादिषु गुणिषु क्रमशो यथासंख्यं पूर्वो गुणः शब्दादिर्वर्त्तते। यथा खे शब्दः वायौ स्पर्श इत्यादि। गन्धस्तु यद्यप्युत्तरः गुणान्तराभावात् पूर्वो न भवति तथापि छत्रिणो गच्छन्तीति न्यायेन अपूर्वस्यापि पूर्वत्वं समर्थनीयम्। न केवलं पूर्वो गुणो वर्त्तते किन्तु पूर्वगुणश्च पूर्वस्य भूतस्यापि यो गुणः सोऽप्युत्तरभूते वर्त्तत इत्याह पूर्वगुणश्चेति। तेन वायौ स्पर्शो नैसर्गिकः पूर्वस्य आकाशस्य यो गुणः शब्दः सोऽपि वायौ इति द्विगुणत्वम्। एवमग्नौ रूपं

नैसर्गिकं शब्दस्पर्शौ च पूर्वभूतगुणौ इति त्रिगुणत्वम्। एवमन्यत्रापि। न चैवं सर्व एव गुणाः सर्वेषामेव प्रसज्येरन् तत्कथमाप्यो रस इति वाच्यम्। तेषु तेषु भूतेषु तत्तद्गुणानुप्रवेशेऽप्युत्कर्षाभिप्रायेणाप्यत्वादिव्यपदेशात्। यत आकाशाधिके द्रव्ये शब्दोऽधिकः तथा वाताधिके द्रव्ये स्पर्शोऽधिकः। तथा तेजोऽधिके रूपमधिकम्। जलाधिके च रसोऽधिकः। पृथिव्यधिके च गन्धोऽधिक इति। शब्दादीनामाकाशीयत्वादिव्यपदेश इत्यर्थः। तथा अपामव्यक्तरसत्वेऽपि भूतान्तरसम्बन्धात् मधुरत्वादिवैजात्यमुपपद्यते। उक्तञ्च सुश्रुते। स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षड्विधो भवतीति। अस्यार्थः स आप्यो रसो जलादन्यानि भूतानि शेषभूतानि तेषां संसर्गात् विदग्धः परिणतः कालसह्वायभूमिवियदनिलानलसंसर्गेण परिणामान्तरं गतः षट्प्रकारो भवतीति। तत्र पृथिव्यम्बुगुणबाहुल्यात् मधुरः। तोयाग्निगुणबाहुल्यात् अम्लः। पृथिव्यग्निगुणबाहुल्यात् लवणः। वाय्वग्निगुणबाहुल्यात् कटुकः। वाय्वाकाशगुणबाहुल्यात् तिक्तः। पृथिव्यनिलगुणबाहुल्यात् कषाय इति। ननु यदि तोयाग्निगुणबाहुल्यात् अम्लता तर्हि उष्णजलस्यापि अम्लता कुतो न स्यात्। नैष दोषो न हि भूतसंसर्गमात्रादेव रसविशेषो निष्पद्यते किं तर्हि विशिष्टां परिणतिमपेक्षते। तद्यथा पार्थिवस्यापि लोष्ट्रस्याग्नितप्तस्य पृथिव्यग्निगुणबाहुल्येऽपि न लवणता भवति लवणत्वसाधनविशिष्टविदाहासम्भवादिति। एनमेवार्थं श्लोकेन कश्चिदाह।

तोयाग्निगुणबाहुल्येऽप्यम्लत्वं नोष्णवारिणः।
नैकस्माद्भूतसंयोगाद्विदाहाच्च रसा यतः॥

ननु यदि शेषभूतयोगान्मधुरादिषड्विधत्वं तत्कथं पृथिव्यम्बुगुणबाहुल्यं मधुरेऽभिधाय मधुरेऽपि विशेषेऽपां कारणत्व-

मुच्यते। अत्र वदन्ति आपो रसानामाधारकारणम् अपां पृथिव्यामनुप्रवेशात् पृथिव्यपि आधारकारणमेव तेन जलक्षितौ अपि तदाधारतया रसानामभिव्यक्तौ अभिव्यक्तेश्च मधुरादिरूपतामन्तरेण असम्भवात् मधुरादिविशेषेऽपि कारणे भवतः। अग्न्यादयस्तु त्रयो नीरसतया मधुरादिविशेषे निमित्तकारणं प्राधान्येन भवन्ति तद्व्यतिरेकेण अम्लादिरसाभावात्। रसाभिव्यक्तेश्च अग्न्यादिभूतत्रयसन्निधानं विनानुपलब्धेरभिव्यक्तौ अपि कारणत्वमग्न्यादीनां भवति। तदुक्तं चरके

रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः॥

अत्र हि चकारद्वयात् जलक्षित्योरपि विशेषे कारणत्वम्। तथा खादीनाञ्च निर्वृत्तौ अपि कारणत्वमुक्तं तेन मधुरे विशेषेऽपि अपां कारणत्वात् सुष्ठूक्तं पृथिव्यम्बुगुणबाहुल्यात् मधुर इति। एवं तोयाग्निगुणबाहुल्यात् अम्ल इत्यपि समाधेयम्। न च यथा भूमितोयाधिक्यात् मधुर एवं तोयवाय्वाधिक्यात् भूम्याकाशाधिक्यात् वा रसान्तरोत्पत्तिः कुतो न स्यादिति वाच्यम्। स्वभावस्यापर्य्यनुयोज्यत्वात् यतः पृथिव्यादिभूतानामेवायं स्वभावः यत् केनचिदेव भूताधिक्येन व्यवस्थिता रसविशेषोत्पादकाः न पुनर्यत्किञ्चिद्भूताधिक्येनेति। अतएव तोयाग्न्योः परस्परविरोधात् कथमेककार्य्यारम्भकत्वमित्यपि अपास्तमुक्तयुक्तेरेव। ननु च रसानां षड्विधत्वमनुपपन्नम् अन्तरीक्षजलादौ अव्यक्तस्य सप्तमरसस्यापि विद्यमानत्वात्। नैवं मधुरादीनामेव षण्णां तत्र अन्तरीक्षजलादौ अव्यक्तीभावेन तस्य अव्यक्तरसस्य मधुरादिभ्योऽभिन्नत्वात्। न च क्षारस्यापि रसत्वात् सप्तमत्वोपपत्तिरिति वाच्यम्। तस्य क्रियागुणयोगेन द्रव्यत्वात् तदुक्तं चरके। क्षरणात् क्षारो नासौ रस इत्यादि। तत्सहचरितस्य लवण

मधुरो धातुविवर्द्धन आयुर्बलवर्णत्वग्निकृत्कण्ठाः।
सन्धानकृन्मुखादिह्लादकरः स्निग्धगुरुशीतः ॥२॥
अम्लोरुचिदीप्तिकरो
मन इन्द्रियबोधनो हृदयतर्पी।

एवान्तर्भावो लवणवर्गपाठात्। एते च रसाः परस्परसंयोगात् सप्तपञ्चाशद्भवन्ति। ते पुनश्चरकसुश्रुतादौ अवगन्तव्याः। इह तु विस्तरभयान्नोक्ताः॥ १ ॥

सम्प्रति रसेषु मध्ये आयुष्यत्वादिगुणयोगेन मधुरस्याद्यनिहितत्वात् तद्गुणान् प्रथममभिदधते मधुर इति। सन्धानकृदिति। उरःक्षतादीनां मुखादीति आदिशब्दात् घ्राणजिह्वाकण्ठोष्ठग्रहणम्। स्निग्धगुरुशीत इत्यनेन वातपित्तघ्नत्वं बोध्यम्। एतच्च शीतत्वमौत्सर्गिकं तेन क्वचिन्मधुरस्य उष्णत्वमपि ज्ञेयम्। तदुक्तं चरके मधुरं किञ्चिदुष्णं स्याद् यथा चानूपमामिषमिति। यद्यपि गुणानां निर्गुणत्वेन रसेषु स्निग्धादयो गुणा न सन्त्येव तथाप्युपचाराद्द्रव्यगुणा एव रसेषु निर्दिश्यन्ते। तदुक्तम्

गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये।
रसेषु व्यपदिश्यन्ते साहचर्योपचारतः॥

इति। साहचर्यमेकार्थसमवायः। उपचारस्य किं फलमिति चेद् ब्रूमः द्रव्यगुणकथने मधुरादिरसनिर्देशेनैव अनुक्ता अपि स्निग्धत्वादिगुणाः प्रायो मधुररससहचारिणो ज्ञेयाः। तेन मधुरत्वं निर्दिश्य पुनः स्निग्धत्वादि न वाच्यं साहचर्यलब्धत्वात्। यत्र वा उच्यते तत्रातिशयार्थं स्पष्टार्थञ्च ज्ञेयम्॥ २ ॥

दीप्तिर्वह्नेर्बोधनम् प्रसादः। आर्ज्जवमनुलोमनम् अत्रापि

वातार्जवकृद्बल्यः
कण्ठदहः स्निग्धलघुरुष्णः ॥ ३ ॥
लवणः क्लेदनः पाचनो
दीपनो विच्छेदनः सरस्तीक्ष्णः ।
कफविष्यन्दी रुचिकृत्
स्निग्धगुरूष्णो मुखविशोधी ॥ ४ ॥

अम्लस्योष्णत्वं प्रायिकं तेन आमलकस्याम्लस्यापि शीतत्वं न विरुध्यते। तेन रसे गुणा विशेषाबाधेन ग्राह्या भवन्तीति निर्गलितार्थः ॥ ३ ॥

अत्रापि लवणस्योष्णत्वं प्रायिकमिति सैन्धवस्य शैत्यं न विरुध्यते। अत्र केचित् सङ्गिरन्ते अम्बुतेजोबाहुल्यात् अम्लो रसो निष्पद्यते। तदत्र अम्बुतेजोभ्यामारब्धेऽम्ले किं तोयगुणाधिक्यात् शैत्यं भवतु किंवा अग्निगुणाधिक्यात् उष्णत्वम्। एवं लवणेऽपि पृथिव्यग्निगुणारब्धे वाच्यम्। तौ पुनरम्ललवणौ वा आग्नेयौ एव परं सुश्रुतेन प्रतिपादितौ। यथा कट्वम्ललवणा आग्नेया इति। तदत्र वक्तव्यो हेतुविशेषः। येन परस्परविरुद्धगुणबहुलस्य केवलमाग्नेयत्वमेव स्यादिति। उच्यते अम्लरसादौ परस्परविरोधिभूतद्वयगुणबहुलेऽपि परस्यैव भूतस्य गुणाः पूर्वभूतगुणानभिभूय स्वभावमुष्णत्वं दर्शयन्ति। कुत इति चेत् उष्णजलादौ प्रत्यक्षदृष्टत्वात्। यद्येवं रसेषु सर्वेषु एव लघुत्वप्रसङ्गः अग्निगुणाधिक्यादेव। न एतदस्ति उष्णत्वेन हि उष्णजलादौ शीतत्वमभिभूयमानं दृष्टं सुवर्णरजतलौहादिषु तु गुरुत्वमनभिभूतमेव दृश्यते। तेन अम्लादिगुरुत्वे पूर्वभूतगुणा एव प्रधाना इति। भवति चात्र।

कटुरास्यं शोधयति घ्राणाच्चिविरेचनः क्रमीन्
हन्ति।
रसनोद्वेगक्कटुष्णो लघुरूक्षः कुष्ठहारी च ॥ ५ ॥
तिक्तो न रोचते स्वयमरोचकघ्नो विषघ्नश्च।
दीपनपाचनशोधनरूक्षः शीतो लघुश्चापि ॥६॥
तुवरो हिमगुरुरूक्षस्तम्भी शमनश्च पीतनो ग्राही।
व्रणपाकार्त्तिक्लेदान्निहन्ति कण्ठञ्च बध्नाति ॥७॥

भूतद्वयगुणे मुख्ये मुख्यो गुणविशेषकृत्।
स्नेहगौरवयोः पूर्वः परः स्यादौष्ण्यशैत्ययोः॥

अत्र स्नेहगौरवयोर्विरोधिनोः रौक्ष्यलाघवयोर्ग्रहणमूह्यम्। वस्तुतस्तु भूतानामेव अयं स्वभावो यद्भूतद्वयसमारब्धेऽपि रसे कस्यचिद्भूतस्य कश्चिदेव गुणो व्यक्तत्वेनोपलभ्यते न सर्वं इति। भूतस्वभावे च अदृष्टविशेष एव कारणमुन्नेयमिति ॥ ४ ॥

कटुरसगुणानाह। कटुरिति। अत्र लघुरूक्षत्वेनावृष्यत्वं कटोर्ज्ञेयं तदपि प्रायिकं तेन पिप्पलीनागरयोः कटुरसयोरपि वृष्यत्वमुपपन्नं भवति ॥ ५ ॥

तिक्तरसगुणानाह तिक्त इति। शोधन इति व्रणस्य स्तन्यस्य च। अत्र अर्कागुरुगुडूचीनां तिक्तानामप्यौष्ण्यं पूर्ववत् समर्थनीयम् ॥ ६ ॥

कषायरसगुणानाह तुवर इति। तुवर इति कषायः। ननु च रूक्षः शीतो लघुश्चेति चरकेणोक्तम्। अत्र च गुरुत्वमुक्तमिति विरोध इति चेन्नैवं तत्राप्यलघुरित्यकारप्रश्लेषाद्गुरुरित्यर्थष्टीकाकृद्भिर्व्याख्यात इति। वाभटेऽप्युक्तं

कषायः कफपित्तघ्नो गुरुर्वस्तिविशोधनः।

शीतं कफमारुतकृद् वीर्य्यं गुरु पित्तनाशनं वल्यम्।
उष्णं कफवातहरं पित्तकरं लघु वृष्यञ्च ॥ ८ ॥

इति। यत्तु सुश्रुते कषायो रसो लाघवाद्वातं वर्द्धयतीत्युक्तं तत्तस्य लघुपाकतयेति विरोधं परिहरन्ति। स्तम्भी स्तम्भनः। अत्रापि कषायस्य हिमत्वं स्तम्भित्वञ्चौत्सर्गिकं तेन हरीतक्यां कषायरसस्य उष्णत्वं भेदकत्वञ्चापवादतया समर्थनीयम्। शमन इति संशमनः पीतन इति व्रणस्य ॥ ७ ॥

सम्प्रति रसगुणाभिधानमनु वीर्य्यगुणा वाच्याः। तत्र वीर्य्यस्वरूपमेव प्रथमं निरूप्यते। वीर्य्यं शक्तिः सा च पृथिव्यादीनां भूतानां यः सारभागस्तदतिशयरूपा बोध्या। सा च द्विविधा चिन्त्याचिन्त्यक्रियाहेतुत्वेन। तत्र चिन्त्यक्रियाहेतुर्या द्रव्यरसादीनां स्वस्वकर्मणि स्वभावसिद्धा शक्तिः। अचिन्त्यक्रियाहेतुश्च प्रभावापरपर्य्याया द्रव्याणां रसाद्यननुरूपकार्य्यकारणशक्तिः। उक्तञ्च भूतप्रसादातिशयो द्रव्ये पाके रसे स्थितः। चिन्त्याचिन्त्यक्रियाहेतुर्वीर्य्यं धन्वन्तरेर्मतम्। एतेन द्रव्यरसपाकानां स्वस्वकार्य्यकारणसामर्थ्यं वीर्य्यमित्यर्थः। यत्पुनश्चरके वीर्य्यन्तु क्रियते येन या क्रिया इत्यनेन रसादीनामपि वीर्य्यत्वमुक्तं तद्धर्मधर्म्मिणोरभेदादेव समर्थनीयम्। न चैवं द्रव्यस्यापि वीर्य्यत्वप्रसङ्गः। येनेति करणे तृतीया करणस्यैव शक्तित्वात्। द्रव्यस्य च कर्तृत्वात् एतेन द्रव्यकर्तृके रसादिकरणके कार्य्ये रसादीनामपि वीर्य्यत्वमित्यर्थः। सुश्रुतेऽप्युक्तं येन कुर्वन्ति तद्वीर्य्यमिति। अत्र केचित् ननु यदि शक्तिरेव वीर्य्यं न तर्हि शीतोष्णादिलक्षणम्। अथ शीतोष्णादिलक्षणं न तदा शक्तिलक्षणमिति। सत्यं परमार्थतः शक्तिरेव वीर्य्यं सा पुनर्बलवत्क्रियानिर्वर्त्तनक्षमा रसादिनानायोगाद्विरूपाधिरिति। तस्याः शीतो-

ष्णादयो गुणा उपाधित्वेनाङ्गीकृताः। ते तु द्रव्यसमवायिनो रसादिषु पुनरुपचरितवृत्तय इति। उक्तञ्च

गुणाः कर्मव्यवस्थायै द्रव्याणां रसपाकयोः।
शक्तेः कर्मसु शक्ता ये निरुपाधेरुपाधयः॥

इत्याहुः। यत्पुनर्मृदु तीक्ष्णं गुरु लघु स्निग्धरूक्षोष्ण-शीतलं वीर्य्यमष्टविधं केचित्। केचिद्द्विविधमास्थिताः शीतोष्ण-मिति। मतभेदेनाष्टविधं द्विविधं वा वीर्य्यमिति। उक्तञ्चरकेण तत्पारिभाषिकवीर्य्यपुरस्कारेण। वैद्यके हि रसविपाकप्रभा-वातिरिक्ते प्रभूतकार्य्यकारिणि गुणे वीर्य्यमिति संज्ञा तेनाष्ट-विधवीर्य्यवादिमते पिच्छिलविषदादयो गुणा न रसादिविपरीतं कार्य्यं प्रायः कुर्वन्तीति तेषां रसाद्युपदेशेनैव ग्रहणं मृद्वादीनाम-ष्टानान्तु रसाद्यभिभावकत्वमस्ति। तथा पिप्पल्यां कटुरस-कार्य्यं पित्तकोपनमभिभूय तद्गते मृदुशीतवीर्य्यं पित्तमेव शमयत इति। तथा कषाये तिक्तानुरसे महति पञ्चमूले तत्कार्य्यं वातकोपनमभिभूय उष्णेन वीर्य्येण तद्विरुद्धं वातशमनमेव क्रियते। तथा मधुरेऽपीक्षौ शीतवीर्य्यत्वेन वातवृद्धिरित्यादि। सुश्रुतेऽप्युक्तम् एतानि खलु वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभि-भूयात्मकर्म दर्शयन्तीति। शीतोष्णवीर्य्यवादिमतन्तु अग्नीषो-मीयत्वाज्जगतः शीतोष्णयोरेव प्राधान्याज्ज्ञेयम्। उक्तञ्च

नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ।
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित्॥

प्रथमवादिमते शक्तिमात्रं वीर्य्यं तद्योगात् रसादीनामपि वीर्य्यसंज्ञा। परिभाषिकवीर्य्यवादिमते तु शक्तिविशेषो वीर्य्यं तद्योगात् मृदुतीक्ष्णादीनामेव वीर्य्यसंज्ञा नापरेषां गुणाना-मिति। शास्त्रे व्यवहारस्तु पारिभाषिकवीर्य्यनयेनैवेति। भवतिचात्र

शीतं वीर्य्येण यद्द्रव्यं मधुरं रसपाकयोः।
तयोरम्लं यदुष्णञ्च यच्चोक्तं कटुकं तयोः ॥८॥

शक्तिमात्रन्तु वीर्य्यं स्यादिति केचिद्‌बुधा विदुः।
तन्मते द्रव्यरसयोः पाकस्य च गुणस्य च।
गुर्व्वादेः स्वक्रियोत्पादे शक्तिर्वीर्य्यमिति स्थितिः॥
यदुक्तं चरके वीर्य्यं क्रियते येन या क्रिया।
नावीर्य्यं कुरुते किञ्चित् सर्वा वीर्य्यवती क्रिया॥
इत्यनेन रसादीनां वीर्य्यत्वं तदभेदतः।
गुर्व्वादयो गुणा अष्टौ वीर्य्याणीत्यूचिरे परे॥
यस्मात् सर्वगुणोत्कृष्टाः शक्त्युत्कर्षयुता अमी।
व्यवहारोपयुक्ताश्च नेष्टशास्त्वपरे गुणाः॥
तस्माच्च ते वीर्य्यसंज्ञा इति शास्त्रविदां मतम्।
अन्ये शीतोष्णभेदेन वीर्य्यं द्विविधमूचिरे॥
अग्नीषोममयं विश्वं यत एतच्चराचरम्।

यद्यपि अष्टविधमेव वीर्य्यं भवति तथापि तेषु एव शीतोष्णयोः प्राधान्यात् तद्‌गुणमेवाह शीतमिति ॥ ८ ॥

इदानीं रसद्वारेण द्रव्याणां वीर्य्यमाह शीतमिति। यद्‌द्रव्यं रसे पाके च मधुरं तद्वीर्य्येण शीतं ज्ञेयम्। तथा तयोः रसपाकयोर्यदम्लं तद्वीर्य्येणोष्णं ज्ञेयम्। तथा यच्च द्रव्यं तयोः रसपाकयोः कटुकमुक्तं तदपि वीर्य्येणोष्णं ज्ञेयमिति शेषः। किंवा यच्चोष्णं कटुकं तयोरिति पाठः। प्रभावोऽचिन्त्यक्रियाहेतुर्वीर्य्यमेवेति शक्तिविशेष एव प्रभाव इत्यभिधीयते। प्रभावसत्त्वे च चरके मानमप्युक्तम् यथा

रसवीर्य्यविपाकानां सामान्यं यत्र लक्ष्यते।
विशेषः कर्म्मणाञ्चैव प्रभावस्तस्य स स्मृतः॥

कटुर्विपाकः शुक्रघ्नो बद्धविड्वातलो लघुः।

इति। सामान्यमिति तुल्यता कर्मणां पुनर्विशेषो न तुल्यतेत्यर्थः। एतेन द्रव्ययोर्द्वयोरसादिसाम्ये सत्यपि एकस्मिन् द्रव्ये जायते कार्य्यविशेषः। इतरत्र तु न जायत इत्यत्र यत्कारणतया वाच्यं तदेव प्रभाव इत्यर्थः। एतदुदाहरणञ्च तेनैवोक्तम्।

कटुकः कटुकः पाके वीर्य्योष्णश्चित्रको मतः।
तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम्॥

इति। तद्वदिति। चित्रकतुल्यरसवीर्य्यपाकाः। एतेन चित्रकस्य रसाद्यैस्तुल्यायामपि दन्त्यां तद्विरेचकत्वरूपं विशिष्टं कर्म तत्स्वकारणं प्रभावमनुमापयतीति भावः। तथा रसादि साम्याभावेऽपि रसादिजन्यत्वेन यत्कार्य्यं न अवधारयितुं पार्य्यते तदपि प्रभावकृतमेव मन्तव्यम्। यथा मण्यादीनां विषहरणादिकं कर्म। तदुक्तं चरके

मणीनां धारणीयानां कर्म यद्विविधात्मकम्।
तत्प्रभावकृतं तेषां प्रभावोऽचिन्त्य उच्यते॥

विविधात्मकमिति विषहरणशूलहरणलौहाकर्षणादि॥ ९॥

इदानीं विपाकगुणा वाच्याः। अतो विपाकस्वरूपं प्रथमं निरूप्यते अवस्थापाकापेक्षया विशिष्टः पाको विपाकः। विपाकशब्देनेह लक्षणया विपाकाधेय आहारस्य रसविशेषो गौरवेण लाघवेन वा युक्तोऽभिधीयते। उक्तञ्च वाग्भटेन

जाठरेणाग्निना योगाद्यदुदेति रसान्तरम्।
रसानां परिणामान्ते स विपाक इति स्मृतः॥

अत्र रसानां परिणामा मधुराम्लकटुरूपास्त्रयोऽवस्थापाकाः षड्रसस्यैवान्नस्य आमाशयादिस्थानसम्बन्धमहिम्ना जायन्ते। ते च चरके ग्रहणीचिकित्सिते

स्वादुर्गुरुः सृष्टमलो विपाकः कफशुक्रलः।
पाकोऽम्लः सृष्टविण्मूत्रः पित्तकृत् शुक्रनुल्लघुः ॥१०॥

अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः।

इत्यादिना उक्ता अनुसन्धेयाः। तेषामन्तेऽवसाने पुनर्जाठराग्निसंयोगे सति यद्रसान्तरं रसविशेष उदेति स विपाक इत्यर्थः। इह केचिदाचक्षते प्रतिरसं पाकः अम्लोऽम्लस्य मधुरो मधुरस्य लवणो लवणस्य कटुकः कटुकस्य तिक्तस्तिक्तस्य कषायः कषायस्य इति षड़ेव विपाकाः। किमत्र प्रमाणमिति चेदुच्यते। यथा क्षीरमतिपच्यमानमपि मधुरमेव स्यात्। यथा वा शालियवादय उप्ताः प्ररूढ़ाः फलिताश्च शाल्यादिस्वरूपा एव भवन्ति। तथा मधुरादयोऽपि निष्ठापाकेऽपि मधुरादिस्वरूपा एव भवितुमर्हन्तीति। उक्तञ्च

उप्ताः षष्टिकमाषाद्या वाह्यपक्वाश्च षड्रसाः।
यान्ति नान्यत्वमित्येवं पाकः प्रतिरसं भवेत् ॥

इति। अन्येतु ब्रुवते रसा द्विविधा बलवन्तोऽबलवन्तश्च। बलवत्त्वञ्च व्यक्तत्वेन मात्राबाहुल्येन वा अबलवत्त्वं पुनरेतद्विपर्य्येयेण। तत्र अल्पतया अबलवन्तो रसा बलवतां रसमायान्तीति। तेन निष्ठापाकेन बलवता रसेन दुर्ब्बलरसाभिभवान्न रसप्रतिनियमेन मधुरस्य मधुर एव पाकोऽम्लस्य चाम्ल एवेत्यादि प्रतिनियमाभावात् अनवस्थितः पाक इति। अनियतत्वपक्षेऽपि षट्कत्वमेव कदाचित् कस्यचित् सम्भवादिति।

बहवोऽभिभवन्त्यल्पान् वह्निर्मिश्रीकृता रसाः।
तेनानिश्चितमेवैके पाकमाहुर्मनीषिणः ॥

इति। अन्ये तु वातादिभ्यो दोषेभ्य एव त्रीन् पाकान्

इच्छन्ति। कफात् वातकफात् मधुरः कफपित्तात् अम्लः वातात् पित्तात् वातपित्ताच्च कटुक इति। तदुक्तम्

कफात् वातकफात् स्वादुरम्लः पित्तकफोद्भवः।
दोषैस्त्रयोऽनिलात् पित्तात् वातपित्तात् कटुर्मतः॥

इति। तदेतत् मतत्रयं प्रमाणशून्यत्वात् उपेक्षणीयमेव। किञ्च प्रतिरसं रससदृशः पाकस्तथा बलवत्पराधीनता च पाकस्य रसद्वारप्रतिपाद्यमानकार्य्येणैव लभ्यते। तेनैतत् पक्षद्वयमपि न निष्ठापाके चिन्तनीयं रसस्वरूपनिरूपणेनैवोक्तार्थत्वात्। दोषावस्थाजन्यश्च पाक उपपादकहेत्वभावात् आगमशून्यत्वाच्च प्रेक्षावद्भिरुपेक्षणीय इति। चरकेण तु त्रय एव विपाका अङ्गीकृताः कट्वम्लमधुरभेदेन। अतस्तद्वचनमुपन्यस्यति।

कटुतिक्तकषायाणां विपाकः प्रायशः कटुः।
अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा॥

प्रायश इति वचनात् पिप्पलीकुलत्थादीनाम् रसाननुगुणपाकतां दर्शयति। पाकस्तु तेजःसंयोगरूपो रसेषु सम्भवतीति। कट्वादिशब्दैस्तदाधारद्रव्याण्युच्यन्ते। एतेन यत् कैश्चिदुच्यते अवस्थापाकावसाने षड्रसस्यैव अन्नस्य कटुरसत्वेन तदानीं तिक्तादिरसानामभावात् तेषां विपाको नोपपद्यत इति तदपि अपास्तम्। तिक्तादिरसानामभावेऽपि तदाश्रयद्रव्यस्य विद्यमानत्वादिति। वस्तुतस्तु अवस्थापाकत्रयेण तत्तदामाशयादिस्थानमहिम्ना मधुराम्लकटुरसा उद्भूताः परं क्रियन्ते न तु सर्वथा प्राकृतरसाभिभवः। अन्यथा अवस्थापाकेन प्राकृतानां मधुरादिरसानां सर्वथा अप्राकृतत्वात् तेषां कफादिजनकत्वाभिधानं निरवकाशं स्यादिति। ननु चरके

अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः।

इत्यादिना षसामेव रसानामविशेषेण अवस्थापाकवशात्

कफादिजनकत्वमुक्तम्। ततश्चात्र रसविशेषाणामेव दोषविशेषजनकत्वम्। तदुक्तं यथा

कटुतिक्तकषायाणां विपाकः प्रायशः कटुः।

इत्यादिना च यो विपाक उक्तस्तत् सर्वं विरुध्यते अवस्थापाकेनैव बाधितत्वादिति। नैवम्। न हि अवस्थापाकोऽयं रसस्वभावं निष्ठापाकं बाधते। किञ्च अवस्थायां स्वकार्य्यं करोति तेन रसादयोऽपि स्वकार्य्यं कुर्वन्ति। अवस्थापाकोऽपि स्वीयं कार्य्यं करोति यथा मधुरतिक्ताद्यनेकरसे उपयुक्ते मधुरोऽपि स्वकार्य्यं करोति। तिक्तादयश्च स्वकार्य्यं कुर्वन्ति। अयन्तु विशेषो यदि मधुराख्यस्य अवस्थापाकस्य मधुरादयः श्लेष्मजनका रसा अनुगुणा भवन्ति तदा स बहुश्लेष्माणं जनयति। यदा तु विपरीतकटुकादिपरिगृहीतो भवति तदा स्तोकमात्रं कफं जनयति। एवं पित्तजनकावस्थापाकेऽपि वाच्यम्। कटुतिक्तकषायाणामित्यादिना उक्तश्च निष्ठापाको रसमलविवेकसमकालो भिन्नकाल एवावस्थापाकैः सममिति न विरोधः। स च भिन्नकालोऽपि अवस्थापाकजन्यदोषानुगुणतया अननुगुणतया वा अवस्थापाकाहितदोषाणां वर्द्धनं क्षपणं वा करोतीति निष्ठापाकाभिधानं शास्त्रे प्रयोजनवदेव। अन्ये तु ब्रुवते न तावत् षड्रसादप्यन्नात् सामान्येन अवस्थापाकेऽपि कफोत्पत्तिः। किन्तु षड्रस एवान्ने मधुरो य आहारांशः स उद्भूतः सन् कफं जनयति। तथा पित्तदोषकोपको य आहारभागस्तस्माद्विदाहावस्थायामुद्भूतात् अम्लरसात् पित्तमुत्पद्यते। एवं वायुरपि वायुजनकाहारांशात् कटुतावस्थायां भवतीति। एतच्च न सङ्गतम् अन्नस्य भुक्तमात्रस्य इत्यादिग्रन्थविरोधात्। यतोऽत्र षड्रसस्यैव अन्नस्य सामान्येन अवस्थापाकात् कफादिजनकत्वं दर्शितं न तु कस्यचिदाहारां-

शस्येति। यदि पुनः षड्रसाहारगतो यः श्लेष्मजनको भागः स एव स्थानमहिम्ना उद्भूतः सन् सर्वमेवाहारमवस्थापाकसमये मधुरीकृत्य कफं जनयतीत्युच्यते तदानुमतमेव। अन्ये त्वाहुः। यन्नान्नस्याग्निसंयोगान्मधुराद्यवस्थितं भवति। किन्तु कफादिस्थानेषु मनुष्याणां स्वभावादेव मधुरादयो रसास्तिष्ठन्ति ते चान्नं स्वस्वभावं नीत्वा कफादीन् जनयन्ति। उक्तं हि तन्त्रान्तरे मधुरो हृदयादूर्द्ध्वं रसः कोष्ठे व्यवस्थितः।

ततः संवर्द्धते श्लेष्मा शरीरबलवर्द्धनः।
नाभीहृदयमध्येन रसस्त्वम्लो व्यवस्थितः॥
स्वभावेन मनुष्याणां तत्र पित्तं विवर्द्धते।
अधो नाभ्यान्तु स त्वेकः कटुकोऽवस्थितो रसः॥
प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्द्धतेऽनिलः।
तस्माद्विपाकस्त्रिविधो रसानां नात्र संशयः॥

एतच्च तन्त्रान्तरं श्लेष्मपित्तगतमधुराम्लरसवायुप्राभाविककटुरसाभिप्रायेण वर्णनीयम्। ते च कफादिगता रसा अस्माकमप्यग्न्याशयपाकसहकारितया अनुमता एवेति। तस्माद्यथोक्त एवार्थो न्याय्य इति। अयञ्च विपाकाधेयो रसविशेषो न रसनेन्द्रियग्राह्यः किन्तु तत्तत्कार्य्येणैवोन्नीयते॥ यथा कटुरसाया उष्णवीर्य्याया अपि शुण्ठ्या वृष्यत्वेन मधुरः पाकोऽनुमीयते तथा लवणस्य सृष्टविण्मूत्रत्वेन मधुरः पाक उन्नीयते। तथा तिक्तकषाययोर्बद्धविण्मूत्रतया कटुपाक उन्नीयत इति। ननु लवणस्य मधुरपाकित्वे पित्तरक्तादिकर्तृत्वमनुपपन्नम्। तथा तिक्तकषाययोः कटुपाकित्वेच पित्तहन्तृत्वमनुपपन्नम्। नैवम्। सत्यपि लवणस्य मधुरपाकित्वे तत्र लवणे उष्णवीर्य्यं यदस्ति तेन तत्पित्तरक्तादिकारकत्वम्। विपाकस्तु तत्र पित्तरक्तकरणलक्षणे कार्य्ये बाधितेऽपि सृष्टविण्मूत्रा-

दिलक्षणेन लक्ष्यत एव। तथा तिक्तकषाययोरपि कटुविपाको बलवता शीतवीर्य्येण बाधितत्वान्न पित्तजनकः। बद्धविण्मूत्रतया तु लक्ष्यत एव। एतेन यदुच्यते लवणादिषु विपाको यदि रसवीर्य्याभ्यां बाधितः स्वकार्य्यकरो न स्यात् तत् किं तेनोपदिष्टेन इति तन्निरस्तं भवति। यतोऽस्यैव सृष्टविण्मूत्रतादि तत्कार्य्यमिति। अन्ये तु एतद्दोषभयात् लवणस्तथेत्यत्र तथाशब्देन विप्रकृष्टमन्नमात्रस्य लवणोऽम्लः पच्यते इति व्याख्यानयन्ति। तत्र कट्वादीनां कटुविपाकः अम्लोऽम्लस्य शेषयोर्मधुर इति जतुकर्णविरोधात्। न च त्रय एव विपाकाः कथं भवन्ति तिक्तादयोऽपि कुतो न स्युरिति वाच्यम्। भूतस्वभावस्यापर्य्यनुयोज्यत्वात्। ननु यत्र रसविपरीतः पाको यथा लवणस्य मधुरः तिक्तकषाययोश्च कटुः स उच्यतां यस्तु समानगुणो मधुरस्य मधुरः अम्लस्याम्लः कटुकस्य कटुकः तत्कथनेन किं प्रयोजनम्। यतो रसगुणैरेव तत्र विपाकगुणोऽपि ज्ञास्यते। नैवम्। लवणादिवद्विसदृशरसान्तरोत्पादशङ्कानिरासार्थमपि तत्रानुगुणोऽपि विपाको वक्तव्य एव। तथा यत्र समानगुणो विपाकस्तत्र बलवत्कार्य्यं भवति। विपर्य्यये तु दुर्बलमिति ज्ञेयम्। सुश्रुतेन द्विविध एव विपाकोऽङ्गीकृतः मधुरः कटुकश्चेति। द्वैविध्ये च भूतानां गुरुलाघवेन द्वैविध्यमेव हेतुः। यदुक्तं तेनैव तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति तद्गुणसाधर्म्यात्। तत्र पृथिव्यापश्च गुर्व्यः। शेषाणि च लघूनि। तस्माद् द्विविध एव विपाको भवति। तद्गुणसाधर्म्याच्च गुरुता लघुता चेत्यर्थः। अत्रापि सुश्रुतमते यद्यप्यम्ललवणौ मधुरविपाकौ तथापि तयोर्वातहरत्वे सृष्टविण्मूत्रतायाञ्च मधुरकार्य्यकरत्वं न पुनः पित्तहरत्वे। तथा तिक्तकषाययोः कटुविपाकयोरपि वातकर्तृत्वे बद्धविण्मूत्रतायाञ्च कटुकार्य्यकरत्वं न पुनः

पित्तकर्तृत्वे अचिन्त्यत्वात् प्रभावस्य। एतदेवोक्तं माधवेनापि ।

स्वाद्वादीनां स्वादुपाकः सुश्रुताचार्य्यसम्मतः ।
तत्कथं पित्तजननौ स्यातामम्लकटू रसौ ॥
कटुपाकौ कथं पित्तनाशनौ तिक्ततूवरौ ॥

सिद्धान्तोऽपि ।

अम्लपट्वोः फलं दद्यात् स्वादुपाकः कटुः पुनः ।
कषायतिक्तयोरित्थं सुश्रुताचार्य्यसम्मतः ॥ इति ।

ननु पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः ।
विपक्वः पञ्चधा सम्यक् स्वान् गुणानभिवर्द्धयेत् ॥

इत्यनेन पञ्चधापि विपाकस्तेनैवोक्तः। तत्कथं न विरोध इति चेन्नैवम्। उपाधिभेदेन विरोधाभावात्। तत्र हि भूतभेदमवलम्ब्य पञ्चधात्वम्। अत्र तु लाघवगौरवरूपं भूतगुणद्वैविध्यमाश्रित्य द्वैविध्यमुक्तमिति न विरोधः। यथा पञ्चभूतात्मकत्वेऽपि द्रव्याणां सौम्याग्नेयत्वाद्द्वैविध्यमिति। यत् पुनः सुश्रुतेनाम्लपाको न मन्यते तच्चरकमतानुयायिनो न सहन्ते। यतोऽम्लपाकतयैव व्रीहिकुलत्थादीनां पित्तकर्तृत्वमुपपद्यते। अथ मन्यसे व्रीह्यादेरुष्णवीर्य्यत्वेन तत्र पित्तकर्तृत्वम्। तदसत्। मधुरस्य व्रीहेस्त्वन्मते मधुरविपाकस्य उष्णवीर्य्यतायामपि सत्यां न पित्तकर्तृत्वमुपपद्यते। रसविपाकाभ्यामेकस्य वीर्य्यस्य बाधनीयत्वात्। किञ्च अम्लपाकत्वाद् व्रीह्यादेः पित्तमम्लगुणमुत्पद्यते। यदि तु उष्णवीर्य्यताकृतं स्यात् तदा कटुगुणभूयिष्ठं पित्तं स्यात्। दृश्यते च व्रीहिभक्षणादम्लोद्गारादिना अम्लगुणभूयिष्ठतैवेति। किञ्च पृथिवीसोमगुणातिरेकान्मधुरः पाको भवति वाय्वग्न्याकाशातिरेकाच्च कटुर्भवतीति पक्षे यदा व्यामिश्रगुणातिरेको भवति। तदा सोमाग्न्यात्मकस्याम्लस्य उत्पादकः

शालयो मधुराः शीता लघुपाका बलप्रदाः।
पित्तघ्नाल्पानिलकफाः स्निग्धबद्धाल्पवर्च्चसः ॥११॥

कथं प्रतिक्षेपणीयः। अथवा तन्त्रकारयोः किमनयोरनेन वचनमात्रविरोधेन कर्त्तव्यम्। यतो यदम्लपाकं चरके ब्रूते तत् सुश्रुतेन वीर्य्योष्णमिति कृत्वा समाधीयते। अनेन न कश्चित् द्रव्यगुणे विरोधः। यत्तु सुश्रुते अम्लपाकनिरासार्थं दूषणमुच्यते। पित्तं हि विदग्धमम्लतामुपैति इत्यादिना तदनभ्युपगमादेव निरस्तमिति। विपाकगुणानाह कटुरित्यादि ॥ १० ॥

सम्प्रति द्रव्याणां गुणे वक्तव्ये द्रव्येषु चान्नस्य प्राधान्यात् अन्नेषु च शूकधान्यानां शूकधान्येषु च शालीनाम्। अतः प्रथमं तेषां सामान्यगुणानाह शालय इत्यादि। अत्र शालिशब्देन हैमन्तिकं धान्यमुच्यते। यत्तु अकण्डितशुक्लत्वेन शालित्वमुच्यते॥ तद्वैशेषिकेषु षष्टिकादिषु शारदेषु व्रीहिषु च गतत्वात् सकलशाल्यव्यापकत्वाच्च न युक्तम्। लघु शीघ्रं पाको येषां ते लघुपाका लघुगुणयोगात् शीघ्रपाका इत्यर्थः। तन्त्रान्तरेऽप्युक्तम्।

अन्नपानविधावुक्तं यद्‌द्रव्ये गुरुलाघवम्।
अग्निना तद्विजानीयात् पचनेन चिराचिरम्॥

इति। न तु लघुगुणयुक्तः पाको येषामित्यर्थः। यतस्तादृशः पाकः कटुरेव भवति। तथा सति स्निग्धत्वं बलावहत्वञ्चानुपपन्नं स्यात्। नन्वेवं बद्धाल्पवर्चस्त्वं मधुरपाके चानुपपन्नम्। यदुक्तम्।

स्वादुर्गुरुः सृष्टमलो विपाकः कफशुक्रलः।

इति। नैष दोषः। शालीनां मधुरपाकित्वेऽपि बद्धाल्पवर्चस्त्वं

द्रव्यप्रभावात् । नन्वेवं कटुपाकत्वेऽपि स्नेहादयो द्रव्यप्रभावादेव भविष्यन्तीति चेन्नैतदस्ति शालिनां कटुपाकाङ्गीकारे बहुतन्त्रविरोधप्रसङ्गात् । तथाच चरकः

शीता रसे विपाके च मधुराः स्वल्पमारुताः ।
बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः ॥

इति । तथा वाग्भटेऽपि । स्वादुपाकरसाः स्निग्धा इत्यादि-मधुरपाकत्वेऽपि शालीनां शीघ्रपाकित्वं प्रकृतिलघुत्वात् । अतएव मात्राशितीये । शालिषष्टिकशशशम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रामेवापेक्षन्त इत्यनेन लघुत्वं शीघ्रपाककारणमुक्तम् । अन्ये पुनरत्र पाकद्वयमङ्गीकृत्य सुश्रुतचरकयोरविरोधं मन्यन्ते । तत्रैको रसपाकोऽन्यश्च द्रव्यपाको यदाह विश्वामित्रः

पूर्वं रसा विपच्यन्ते पश्चात् द्रव्यं विपच्यते ।
पूर्वस्तत्र तु भाक्तः स्यादुत्तरः पारमार्थिकः ॥

इति । तेन रसपाकमाश्रित्य मधुररसपाकित्वेन शालीनां गुरुपाकित्वं चरकेणाङ्गीकृतम् । पुनस्तेनैव निष्ठापाकमभिप्रेत्य मात्राशितीये शालिषष्टिक इत्यादिना लघुपाकित्वमप्यङ्गीकृतम् । सुश्रुतेनापि निष्ठापाकमभ्युपेत्य शालिनां लघुपाकित्वमुक्तम् । स्निग्धत्वं बलावहत्वञ्च रसपाकमभ्युपेत्य उक्तमिति न विरोधः । तत्तु न सम्यक् रसपाकस्य पूर्वमेव निराकृतत्वात् । अवस्थापाकेन सर्वस्यैव रसस्य कटुपाकित्वे तदानीं मधुरादिरसासम्भवादिति तेजःसंयोगरूपः पाको रसेन सम्भवत्येवेति पूर्वमेवोक्तमिति । यदप्युक्तं विश्वामित्रेण तदप्याहारस्यामपच्यमानपक्वावस्थाभिगुणीभूताहारपरिणामेन गुणभूतस्वरूपरसपरिणामाङ्गीकारः । पुनरामविदाहपक्वावस्थासु प्रत्यनीकरसानामपि कफपित्तवातकारित्वविधानार्थम् । तथाहि

रक्तशालिस्त्रिदोषघ्नश्चक्षुष्यः शुक्रमूत्रलः।
तृष्णाघ्नो बलकृत् स्वर्य्यो हृद्यस्तदनु चापरे ॥१२॥
षष्टिको मधुरः शीतो लघुर्ग्राह्यस्त्रिदोषहा ॥१३॥
मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः।
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ १४ ॥

अवस्थायां कटुतिक्तकषाया अपि आमाशयस्थानमहिम्ना प्राप्तमधुरभावाः कफं कुर्य्युः। विदाहे पुनरम्लभावेनाशयप्रभावजेन मधुरतिक्तकषाया अपि पित्तमावहन्ति। एवं पक्वाशयप्रभावोपबृंहितेन पाकनिःसारभावरौक्ष्येण मधुराम्ललवणा अपि वातकारिण इति। तदेतद्विस्तरेण चरके ग्रहणीचिकित्सितेऽभिहितम्। वास्तवस्तु द्रव्याणामेव पाकः स च सम्यक् धातुरसमलविवेकान्तलक्षण एव निष्ठापाक इत्यभिधीयते। विश्वामित्रेणापि भाक्त इति वदता रसपाकानामभाव एव सूच्यते न पुनरुभयसम्भव इति ॥ ११ ॥

अनुशब्दो हीनार्थः। तेन रक्तशालिमपेक्ष्य अपरे शालयः किञ्चिद्धीनगुणा इत्यर्थः। एतेन शेषशालीनामप्यतिदेशेन गुणा उक्ताः ॥ १२ ॥

यद्यपि षष्टिकादयो बहवो भवन्ति ग्रैष्मिकास्तथापि तेषु मध्ये प्रधानस्य षष्टिकस्य गुणमाह षष्टिक इति।

ननु चरके शीतः स्निग्धो गुरुः स्वादुरित्यनेन षष्टिकस्य गुरुत्वमुक्तमिह कथं लघुरिति पठ्यते। नैवमत्रागुरुरित्यकारप्रश्लेषाल्लघुत्वमेवार्थः। अतएव मात्राशितीये लघुरित्युक्तम् ॥१३॥

व्रीहिसंज्ञकस्य शारदाशुकधान्यस्य गुणमाह मधुर इति। पाटलो व्रीहिविशेषः ॥ १४ ॥

**धान्यं शरद्ग्रीष्मभवं पाकेऽम्लं पित्तकृद्गुरु ॥१५॥**
**धान्यं सर्वं समातीतं पथ्यं लघ्वन्यथा नवम्।**
**ततः परं लघुतरं रूक्षं वातप्रकोपणम् ॥ १६ ॥**

अनुक्तानां शारदग्रैष्मिकधान्यानां सामान्यगुणमाह धान्यमिति। ननु शाल्यादीनामुपयोगस्तण्डुलभक्तपेयादिप्रकारेण परं भवति ते च तण्डुलादयः पृथगेव गुणतो निर्देष्टव्याः॥ अतस्तत्प्रकृतिगुणाभिधानं व्यर्थं तद्विकृतिगुणेनैव कार्य्यकरत्वात्। नैव द्रव्याणां हि प्रकृतिगुणसहिता एव विकृतिगुणाः कार्य्यकराः। यतस्तण्डुलभक्तपेयादयो रक्तशाल्यादिप्रकृतिगुणानुगता एव। नहि रक्तशालिकृतभक्तपेया लाजादयो यथा लघ्वादिगुणास्तथा व्रीहिकृतभक्तपेया लाजादयः। किन्तु प्रकृतिगुणानुगतरक्तशालिकृतभक्ताद्यपेक्षया गुरव एव। तेन यत्र प्रकृतिगुणसमानो विकृतिगुणस्तत्र गुणोत्कर्षः। यत्र प्रकृतिगुणविपरीतो विकृतिगुणस्तत्र गुणापकर्षः। यथा व्रीहेर्गुरोर्लघवो लाजाः। अत्र लाजकरणेनाल्पमेव लघुत्वं क्रियते। यत्र प्रकृतिगुणैर्न समानो नापि विपरीतो विकृतेर्गुणः। तत्र द्वयोरपि प्रकृतिविकृतिगुणयोः पृथगेव कार्य्यकारित्वमुत्सर्गतः। क्वचित्तु यद्विकृतेर्बलीयस्त्वेन प्रकृतिगुणाभिभावकत्वं यथा शुक्तासुतार्द्रककरीरादिषु तत्तदासुतं तदितिविशेषागमादेवप्रतीयते। तेन तत्र प्रकृतिगुणानां दुर्बलत्वम्। यदपि प्रकृतिगुणोपमर्द्दन तद्विरुद्धकार्य्यकर्त्तृत्वं विकृतेः यथा कांस्यभाजने दशरात्रस्थितस्य सर्पिषो मारकत्वमित्यादि। तदप्यपवादरूपमागमवेद्यमेव। तेन यत्रोत्सर्गभूतशास्त्रार्थापवादस्तत्रोपदेशं शास्त्रकारः करोत्येवेति प्रकृतिविकृत्योः पृथग्गुणाभिधानं युक्तमेव। अयञ्च न्याय एवंजातीयेषु मांसादिषु ज्ञेयः॥ १५॥

दग्धायामवनौ जाताः शालयो लघुपाकिनः ।
कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षिणः ॥१७॥
स्थलजाः कफपित्तघ्नाः कषायाः कटुकानुगाः ।
किञ्चित् सतिक्तमधुराः पवनानलवर्द्धनाः ॥ १८ ॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
अदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥१९॥

इदानीं धान्यानां कालविशेषेण क्रियाविशेषेण च गुणविशेषमाह धान्यमिति । ततः परमिति वर्षद्वयात् परमित्यर्थः ॥ १६ ॥

लघुपाकिन इति शीघ्रपाकाः । अन्ये तु कटुपाकिन इत्याहुः ॥ १७ ॥

स्थलजा इति जाङ्गलभूमिसम्भवाः । अत्र सतिक्तमधुरा इत्यत्र ईषदर्थेन सहशब्देन सम्बन्धात् किञ्चिदर्थे लब्धे किञ्चिदितिपदं पुनरुक्तमिति मन्यमानाः पवनानलवर्द्धना इत्यत्र योजयन्ति केचित्

केदारा मधुरा वृष्या बल्याः पित्तनिवर्हणाः ।
ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥

केदारा इत्यनूपदेशजाः जलसमीपभूमिभागजाता इत्यर्थः ॥ १८ ॥

एकवारमुत्पाट्य येऽन्यत्र रोप्यन्ते ते रोप्या अतिरोप्यास्तु एकवारमुत्पाट्य रोपयित्वा पुनरुत्पाट्य रोपिताः तेन वारद्वयं रोपिता इत्यर्थः । एतेन प्रथमं यत्रोप्तास्तत्रैव ये पच्यन्ते तदपेक्षया उत्खातरोपिता लघवस्ततोऽपि रोप्यातिरोप्या

**शालयश्छिन्नरूढा ये रूक्षास्ते बद्धवर्चसः।**
**तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफापहाः॥२०**
**गोधूमः स्थैर्य्यकृद्वृष्यः स्निग्धशीतः सरो गुरुः।**
**सन्धाता वृंहणो बल्यो जीवनो वातपित्तहा ॥२१॥**

लघव इत्युपदर्शितम्। शीघ्रपाका इति शीघ्रं जठराग्निना पच्यन्ते। लघव इत्यनेन लघुपाकित्वमुक्तमिति केचित् ॥ १९ ॥

छिन्नरूढा इति। प्रथमं छिन्नाः पश्चात् रूढ़ाः। अत्र केचिच्चोदयन्ति ननु च दग्धायामवनौ जाता इत्यादिना उक्तशाल्यादीनां यदि पुरोक्तगुणविरोधेन गुणान्तरोत्पत्तिरुच्यते तदा पूर्वगुणवर्णनमनर्थकम् तदविरोधेनेति चेत् तदा पूर्वापरविरोधः। तथा हि तेषां शालीनां स्निग्धत्वमुक्तं दग्धावनिसम्भूतानान्तु तेषामेव रौक्ष्यमपीति। तन्न उत्सर्गापवादभेदेनाविरोधात्। एतच्च पूर्वमुक्तमेव ॥ २० ॥

गोधूमगुणमाह गोधूम इति। अत्र गोधूमस्य स्वादुशीतस्निग्धादिगुणयोगात् श्लेष्मकर्त्तृत्वं ज्ञेयम् अतएव सुश्रुते श्लेष्मकर इत्युक्तम्। अन्ये तु "चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजन" इति वसन्ते गोधूमस्य विधानात् श्लेष्मकारित्वमस्यायुक्तमिति मन्यमानाः सुश्रुते श्लेष्मकर इत्यस्य स्थाने शोफकर इति पठन्ति। तत्तु न सम्यक् गोधूमगुणपर्य्यालोचनया कफकर्त्तृत्वस्यैव युक्तत्वात् वसन्तस्यादानमध्यत्वेन वातपित्तानुबन्धात् स्निग्धशीतस्यापि गोधूमस्य तत्रोपयोगोऽपि न विरुध्यते। किंवा गोधूमोऽत्र पुराणोऽभिहितः स च न कफकरः। यदुक्तम्

मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते।
मुद्गाद् गोधूमतः क्षौद्रात् सिताया जाङ्गलामिषात्॥

यवः स्वादुः कषायश्च कफपित्तहरो हिमः।
व्रणेषु सर्वदा पथ्यस्तिलवत् पाकतः कटुः॥
वहुवातपुरीषश्च मेदोवाततृषापहः।
वृष्यो वल्यो वद्धमूत्रस्थैर्य्याग्निस्वरवर्णकृत्॥२२॥

इति। अतएव वसन्तचर्य्यायां वाग्भटेन

पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक्॥

इत्युक्तम्। अन्ये तु आदानमध्यत्वेन यथा चन्दनागुरुभ्यां मिलित्वानुलेपः। तथा यवगोधूमयोर्यथायथं वातपित्तप्रत्यनीकत्वान्मिलितयोरेवोपयोग इत्याहुः॥ २१॥

कषायश्चेति चकारेण मधुरत्वापेक्षया कषायस्य हीनतां वोधयति। अतएव चरके सकषायश्चेति उपसर्जनार्थः सह-शब्दः प्रयुक्तः। व्रणेषु सर्वदा पथ्यस्तिलवदिति तिलो यथा व्रण-लेपे वातपित्तकफेषु शस्यते तथा यवोऽपि सर्वदा इत्यनेन व्रणस्य सर्वास्वेव अवस्थासु यवस्य हितत्वं वोधयति। तदुक्तम्

तिलवद्यवकल्कन्तु केचिदाहुर्मनीषिणः।
अविदग्धन्तु शमयेद्विदग्धं पाचयत्यपि।
पक्वं भिनत्ति भिन्नञ्च शोधयेद्रोपयेदपि॥

इति। अन्ये तु सर्वदा इत्यनेन व्रणे यवमण्डप्रयोगेणापि हितमिच्छन्ति। अतएव सुश्रुते हिताहितीये व्रणहितवर्गे यवः पठितः। पाकतः कटुरिति इह केचिदाचक्षते कटुपाकित्वेन लघुत्वमुक्तम्। न च चरके रूक्षः शीतो गुरुरित्यनेन विरोधः। तत्रापि अकारप्रश्लेषेणागुरुरिति पाठाङ्गीकारात्। गुरुत्वप्रतिज्ञानार्थमीषदर्थे नञं प्रश्लेषयन्ति। अतएव लघुरित्यसन्दिग्धमपि न पठितम्। तथापि एतदर्थमेवासन्दिग्धार्थमेव

**श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ।**
**तद्वच्च कङ्गुनीवारकोरदूषाः प्रकीर्त्तिताः ॥ २३ ॥**
**मुद्गः कषायो मधुरः कफपित्तास्रजिल्लघुः ।**
**ग्राही शीतः कटुः पाके चक्षुष्यो नातिवातलः ।**
**प्रधाना हरितास्तत्र वन्या मुद्गरसाः स्मृताः ॥ २४॥**
**मसूरो मधुरः शीतः संग्राही कफपित्तहा ॥२५॥**

असन्दिग्धमपि लघुपाक इति न कृतम् । अन्ये तु चरकोक्त-गुरुगुणस्यापि यवस्य कटुविपाकित्वं द्रव्यप्रभावादेव समर्थनीय-मित्याहुः । बहुवातपुरीष इति कुक्षौ वातकर्त्वेन ज्ञेयम् । तेन मेदोवातलषापह इत्यनेनोक्तवातहन्तृत्वं न विरुध्यते । किंवा मेदसावृतो वातो मेदोवातः । तेन मेदसावृत एव वायौ यवो हितोऽनिवारणे तु रूक्षकषायशीतकटुपाकतया कारण-भूत एव । बल्यत्वञ्च स्रोतोविशुद्धिकरत्वेन सम्यक् रससञ्चा-रेणेष्टं न तु देहस्योपचयकारकत्वेन रौक्ष्यादिधर्मयोगाद् यवस्य । अतएव सुश्रुते स्थूलविलेखन इत्युक्तम् । बद्धमूत्रो-ऽल्पमूत्र एतेन प्रमेहिणां हितमिति डल्वणो व्याचष्टे ॥ २२ ॥

तृणधान्यानां गुणमाह श्यामाक इति । कङ्गुः काङ्नीति लोके । नीवार उडीति लोके । कोरदूषः कोद्रवः ॥ २३ ॥

शूकधान्यमनु तदुपकरणत्वेन शमीधान्यं वाच्यम् । तत्रापि प्राधान्यात् मुद्गगुणं प्रागभिधत्ते मुद्ग इति । मधुर इति रसतः पाकतश्च । सुश्रुतेऽप्युक्तम् । विपाके मधुरा इति विपाके मधुरा-णामप्येषां बद्धवर्चस्त्वं प्रभावात् । ऋते मुद्गमसूराभ्यामन्ये-त्वाध्मानकारकाः । एतच्च स्वजात्युत्कर्षपरं वचनं न पुनः सर्वथै-वाध्माननिषेधपरमित्याहुः ॥ २४ ॥ २५ ॥

माषो बहुमलो वृष्यः स्निग्धोष्णमधुरो गुरुः।
वातनुत् बृंहणो बल्यो मेदोमांसकफप्रदः ॥२६॥
राजमाषः सरो रुच्यः कफशुक्राम्लपित्तनुत्।
तत्स्वादुर्वातलो रूक्षः कषायो विषदो गुरुः ॥२७॥
चणको वातलः शीतः कफासृक्पित्तपुंस्त्वनुत्॥२८॥
सतीला वातला रक्तपित्तघ्ना बद्धवर्च्चसः ॥ २९ ॥

माषगुणमाह माष इति। अत्र वृष्य इत्यनेन शुक्रस्रुतिकरत्वं शुक्रवृद्धिकरत्वञ्चेति द्विविधमेव वृष्यत्वं विवक्षितम्। अतएवोक्तं वाग्भटेन शुक्रवृद्धिविरेककृदिति। सुश्रुतेऽपि वृष्य इत्युक्ता पुनः शुक्रावहत्वमुक्तमेतदुभयरूपवृष्यत्वपरिग्रहार्थम्॥ २६ ॥

राजमाषगुणमाह राजमाष इति। सरति जलक्षिप्ततैलवदाशयं व्याप्नोतीति सरः। सरत्वं हि स्थिरविपरीतगुणः। अयञ्च गुणो जलबहुलस्यैव द्रव्यस्य भवति। तदुक्तं शीतस्निग्धमृदुस्तिमितसरपिच्छिलमाप्यमिति। तत्स्वादुरिति तयोः रसपाकयोः स्वादुः। उक्तं हि सुश्रुते।

कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्त्ता।
स्वादु विपाके मधुरोऽलसान्वः सन्तर्पणः स्तन्यरुचिप्रदश्च॥

अलसान्वो राजमाष इति चक्रादयः। अस्य च विपाके मधुरस्यापि प्रभावादेव बद्धविण्मूत्रत्वम् कफहारित्वमवृष्यत्वञ्चेति गयदासः। अन्ये तु तत्स्वादुरिति माषवत् स्वादुरित्याहुः। ये तु सर इत्यस्य वर्चोभेदार्थत्वं वर्णयन्ति तन्मते सुश्रुतविरोधोऽपरिहार्य्यः॥ २७॥ २८॥

सतीलो वर्त्तुलकलायः। भिन्नवर्चस इत्यपपाठः।

तुवरी कफपित्तघ्नी कलायश्चातिवातलः॥ ३०॥
मुकुष्टः शीतलो ग्राही कफपित्तज्वरापहः॥ ३१॥
कुलत्थः कफवातघ्नो ग्राह्युष्णस्तुवरः कटुः।
शुक्राश्मरीगुल्मकासश्वासानाहान् सपीनसान्।
हन्त्यर्शोमेदसी हिक्कां रक्तपित्तकरश्च सः॥ ३२॥

हरेणवः सतीलाश्च विज्ञेया बद्धवर्चसः। इति सुश्रुतपाठात् द्रव्यगुणपर्य्यालोचनया बद्धवर्चस्त्वस्यैव युक्तत्वात्॥ २९॥

तुवरी तोरीतिलोके। कलायस्त्रिपुटकलायः, तेउडीति लोके। वर्त्तुलस्य पूर्वोक्तत्वात् चकारात् कलायोऽपि कफपित्तघ्नः। तदुक्तं चरके

चणकाश्च मसूराश्च खण्डीकाः सहरेणवः।

पित्तश्लेष्मणि शस्यन्ते इति। अत्र खण्डीकस्त्रिपुटकलायः। वातल इति तुवरीत्यनेनापि सम्बध्यते। यदुक्तं चरके। आढकी कफपित्तघ्नी वातलेति॥ ३०॥

मुकुष्टः कोमोठ इति ख्याते। अस्य च क्रिमिकर्त्तृत्वम् सुश्रुतेनोक्तम्॥ ३१॥

कफवातघ्न इति। कफघ्नो वातघ्नः संयुक्तकफवातघ्नश्च। तेषु तेषु प्रदेशेषु प्रत्येकं वाते कफे च तथा संयुक्तयोश्च कफवातयोर्हितत्वेन कुलत्थस्योद्दिष्टत्वादिति गयदासः। तुवर इति कषायः कटुरिति सुश्रुतमते विपाके कटुरित्यर्थः। उक्तञ्च

उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः।

इति। चरकमते त्वम्लपाकः। तदुक्तं उष्णाः कषायाः पाकेऽम्ला इति। उभयथापि रक्तपित्तकरत्वमिति द्रव्यगुणेन विरोध इति प्रागेवोक्तम्॥ ३२॥

वन्यः कुलत्थस्तद्वच्च विशेषान्नेत्ररोगनुत् ॥ ३३ ॥
काकाण्डोमात्मगुप्तानां माषवत् फलमादिशेत्॥३४

ईषत्कषायो मधुरः सतिक्तः
संग्राहकः पित्तकरस्तथोष्णः।
तिलो विपाके मधुरो बलिष्ठः
स्निग्धो व्रणालेपन एव पथ्यः।

वन्यकुलत्थगुणमाह वन्य इत्यादि। तद्वदिति गुणैः कुलत्थसदृशः ॥ ३३ ॥

शूकशिम्बासदृशशिम्बः काकाण्डः शूकरशिम्बीति लोके। उमा अतसी। आत्मगुप्ता शूकशिम्बिः। अन्येतु फलानि माषवद्विद्यात् काकाण्डोमात्मगुप्तयोरिति वाग्भटे द्विवचनं दृष्ट्वा काकाण्डोमा कटभीति व्याचक्षते ॥ ३४ ॥

व्रणालेपन एव पथ्य इत्येवकारेण व्रणे तिलानामालेपने पथ्यत्वमभ्यवहारे पुनरपथ्यत्वमेव बोधयति। अतएव व्रणविरुद्धवर्गे नवधान्यादौ तिलः पठितः। सेयं स्वभावोपजनितैवाधारशक्तिरस्य। यदुक्तं सुश्रुते यत्र कुर्वन्ति तदधिकरणमिति। धान्याम्लस्य वहिरन्तःप्रयोगे दाहहरणकरणत्ववदिति। येऽपि स्निग्धो व्रणे सर्वत एव पथ्य इति पठन्ति तन्मतेऽपि वहिरालेपनेनैव सर्वत्र वातकृते पित्तकृते कफकृते च पथ्य इति ज्ञेयम्। यद्वक्ष्यति

माधुर्य्याच्च तथैवौष्ण्यात् स्नेहाच्चानिलनाशनः।
कषायभावान्माधुर्य्यात्तिक्तत्वाच्चापि पित्तनुत् ॥
औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः।

इति। ननु मधुरपाकित्वादेव तिलस्य गुरुत्वं सिद्धं तत् किं

दन्त्योऽग्निमेधाजननोऽल्पमूत्र-
स्त्वच्योऽतिकेश्योऽनिलहा गुरुश्च ॥ ३५ ॥

तिलो विपाके मधुरो गुरुश्चेति। सत्यं एतदेवहि विपाकमधुरस्य तिलस्य गुरुत्ववचनं मधुरपाकस्यापि क्वचिद्गुरुत्वं व्यभिचरतीति बोधयति। तेन रक्तशाल्यादीनां मधुरपाकित्वेऽपि लघुत्व-प्राभाविकं सिद्धं भवतीति गुरुत्वं हि मधुरपाकित्वे अतिदिष्टं न तु स्वभावभूतम्। तेन गुरुत्वस्यातिदेशिकत्वेन तद्व्यभिचा-रोऽपि न दोषायेति। अत्र केचित् ननु यथा विपाकानां मधुरादीनां मधुरादिरसेष्विव गुरुत्वलघुत्वे अतिदिश्येते। एवं वीर्य्येऽप्युष्णादयो गुणा आतिदेशिकाः प्रसज्येरन्। अतस्तत्रापि व्यभिचारः कथं न स्यात्? नैवं वीर्य्यस्य उष्णादयः स्वभावभूता न पुनरातिदेशिकाः उपाध्यन्तराभावात्। रसेषु हि मधुराम्ल-लवणतिक्तादय एव उपाधयः सन्ति। तथैव पाकानामपि मधुरकट्वम्लरूपा एवोपाधयः। तेन तत्र लघुत्वादयोऽतिदेष्टुं युज्यन्ते न पुनर्वीर्य्येषूष्णादयः। येनोष्णादय एव गुणा वीर्य्याणि नहि तस्मिन्नेव स्वभावे स एव स्वभावोऽतिदिश्यते। अतएव न व्यभिचारी स्वयमेव तत्स्वभावत्वात् तदभावे च तस्याभावा-च्चेति। भवति चात्र।

उपाध्यन्तरसद्भावात् पाकानां गुरुलाघवम्।
अतिदिष्टमतस्तत्र व्यभिचारोऽपि सम्भवी॥
शीतोष्णादिस्वभावस्य वीर्य्यस्यान्योऽस्ति नोपधिः।
व्यतिरेको न शीतादेस्तदन्यः कोऽपि नान्वयि॥

इत्याहुः। तिलानां त्वच्यत्वं केश्यत्वञ्चाधिकरणशक्त्या। तदुक्तं यत्र कुर्वन्ति तदधिकरणमिति॥ ३५॥

तिलेषु सर्व्वेष्वसितं प्रधानम्
मध्यः सितो हीनतरास्तथान्ये ॥ ३६ ॥

शिम्वास्तु विविधा रूक्षा वलघ्नाः स्वादुशीतलाः ।
विदाहिनोऽग्निशमना विज्ञेयाः कफनाशनाः ।
शुक्रदृष्टिक्षयकराः कटुपाकाः प्रमाथिनः ॥ ३७ ॥

सितासिताः पीतकरक्तवर्णा
भवन्ति येऽनेकविधास्तु शिम्वाः ।
यथादितस्ते गुणतः प्रधाना
ज्ञेयास्तथोष्णा रसपाकयोश्च ॥ ३८ ॥

अत्र तिलानां वर्णभेदेनानेकविधत्वं तत्र कस्यचित् प्राधान्यं कस्यचित् मध्यत्वमित्यादि दर्शयन्नाह तिलेष्विति । अन्य इति । पीतलोहितहरिता इत्यर्थः ॥ ३६ ॥

शिम्बी धान्यमध्य एव शिम्बित्वसामान्यात् । शिम्बानामपि सामान्यगुणकर्म्म निर्दिशन्नाह शिम्बा इति । स्वादुशीतला इति स्वादवः शीतलाश्चेति । कफनाशना इत्यनेन वातपित्तकर्तृत्वं सूचयति । तदुक्तं सुश्रुते

रूक्षः कषायो विषशोफशुक्रवलासदृष्टिक्षयकृद्विदाही ।
कटुर्विपाके मधुरश्च शिम्बः प्रभिन्नविण्मारुतपित्तलश्च ॥
इति । प्रमाथिन इति भिन्नवर्चसः ॥ ३७ ॥

वर्णविशेषेण शिम्बानां गुणविशेषमाह सितासिता इति ।

यथादित इति । पदार्थानतिवृत्तौ वीप्सायामव्ययीभावः । तेनाद्यातिक्रमेणादौ आदाविति वा अर्थः । गुणत इति रसवीर्य्यशिकलक्गुणैः तेनासितात् कृष्णात् सितो गुणतः प्रधानं पीता-

सहाद्वयं मूलकजाश्च शिम्बाः
कुशिम्बवल्लीप्रभवाश्च शिम्बाः।
ज्ञेया विपाके मधुरा रसे च
बलप्रदाः पित्तनिवर्हणाश्च ॥ ३९ ॥
विदाहवन्तश्च भृशं विरूक्षा
विष्टभ्य जीर्य्यन्त्यनिलप्रदाश्च।
रुचिप्रदाश्चैव सुदुर्जराश्च
सर्वे स्मृता वैदलिकाश्च शिम्बाः ॥ ४० ॥

दसितः। रक्तादपि पीतः श्रेष्ठ इत्यर्थः। ज्ञेयास्तथोष्णा रसपाकयोश्चेति यथादित एव वीर्य्येणोष्णा रसपाकयोश्च प्रधाना इत्यर्थः। अन्ये तु यथोदितास्ते गुणतस्तथार्द्रा इति पठन्ति। अत्रायमर्थः ये शिम्बा येन प्रकारेण रसपाकयोरुदितास्ते तथैवार्द्रा ज्ञेया नतु शुष्काः॥ ३८॥

शिम्बानामेव जातिविशेषेण गुणकर्म्मविशेषं दर्शयन्नाह सहाद्वयमिति। सहाद्वयं मुद्गपर्णी माषपर्णी च। तयोः प्रकरणात् शिम्बा एव मूलकजाश्च शिम्बा इति मूलकशिम्बाः। अन्ये तु मूलकपर्णीजाश्चेति पठन्ति। अत्र मूलकपर्णी शोभाञ्जनः युक्तञ्चैतत्। मूलकशिम्बस्य कटूष्णत्वेन वातकफहन्तृत्वस्यैव युक्तत्वादिति गयदासः। कुशिम्बिर्मुस्तकशिम्बिः वल्लीप्रभवा इति अल्पवल्लीप्रभवाः। अन्ये तु कुशिम्बिवल्ली ग्राम्यशिम्बिवल्लीत्याहुः॥ ३९॥

इदानीं मुद्गादीनामामावस्थायां ये शिम्बास्तेषां गुणमाह विदाहवन्त इति। विष्टभ्य जीर्य्यन्त्यनिलप्रदाश्चेति सवाततोदशूलामल्पमलां प्रवृत्तिं कृत्वा चिरेण पच्यन्त इत्यर्थः। रु

षष्टिका यवगोधूमा लोहिता ये च शालयः।
मुद्गाढ़कीमसूराश्च धान्येषु प्रवराः स्मृताः ॥ ४१॥
कफवातहरस्तीच्णः सिद्धार्थो रक्तपित्तकृत्।
स्निग्धोष्णः क्रिमिकुष्ठघ्नः कटुको रसपाकतः ॥४२॥
तद्गुणा राजिका वाच्यास्तद्गुणोऽन्योऽपि सर्षपः।
रसे पाके च कटुकः कुसुम्भः कफनाशनः ॥ ४३॥
अनार्त्तवं व्याधिहतमपर्य्यागतमेवच।
अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतम् ॥४४॥
यवगोधूममाषाश्च तिलाश्चाभिनवा हिताः।

अनिलप्रदा इत्यन्तो गुणः पूर्वोक्तसर्वाद्वयादीनाम् रुचिप्रदा इत्यादिगुणस्तु वैदलिकानामार्द्रशिम्बानामित्याह। वैदलिका इति विदलयोग्यतामात्रेण ग्रहणं तेन माषादीनां ग्रहणं तिलादीनाञ्च निरास इति ॥ ४० ॥

इदानीं शूकधान्यशमीधान्येषु ये श्रेष्ठास्तानाह षष्टिका इति ॥ ४१ ॥

शिम्बिप्रकरणानुरोधात् सिद्धार्थकानाञ्च गुणानत्रैवाह कफे-त्यादि। सिद्धार्थः श्वेतसर्षपः ॥ ४२ ॥

इदानीं धान्यानां हेयत्वनिमित्तं दोषं दर्शयन्नाह अनार्त्तव-मिति। अनार्त्तवमिति अन्यर्त्तुभवम्। व्याधिहतमिति धान्यस्य ये रोगाः कुङ्कुमिकादयस्ते च कृषीवलसम्प्रदायप्रसिद्धाः तैर्हतमभि-भूतम्। अपर्य्यागतमपक्कम्। अभूमिजमिति उषरोपत्यका-दिसविषभूमिजम्। नवञ्चापीति चकारेण अनतिदोषता नवस्य -प्रकरे-॥ ४४ ॥

पुराणा नीरसा रूक्षा न तथार्थकरा मताः।
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम् ॥४५॥
इति धान्यवर्गः।

---

सर्वं वातहरं मांसं वृष्यं बल्यं स्मृतं गुरु।
प्रीणनं बृंहणं हृद्यं मधुरं रसपाकयोः ॥ १ ॥
हरिणः शीतलो बद्धविण्मूत्रो दीपनो लघुः।
मधुरो मधुरः पाके सुगन्धिर्दोषनाशनः ॥ २ ॥
कषायो मधुरो हृद्यः पित्तासृक्कफवातहा।
संग्राही रोचनो बल्यस्तेषामेणो ज्वरापहः ॥ ३ ॥

नवधान्यस्य यद्दोषवत्त्वमुक्तं तस्यापवादमाह यवेति। विरूढमित्यङ्कुरितम्। अन्ये तु विगताङ्कुरजननशक्तिकमित्याहुः ॥ ४५ ॥

इति धान्यवर्गः।

---

अन्नार्थं धान्यवर्गमभिधाय तदुपकरणव्यञ्जनार्थं मांसवर्गो वक्तव्यः। अत्र मांसानां सामान्यगुणमाह सर्वमिति ॥ १ ॥

हरिणस्य मधुरपाकित्वेऽपि बद्धविण्मूत्रत्वं प्रभावाद्रक्तशालिवदिति चक्रः। दोषनाशन इति दोषशब्दोऽत्र दोषसामान्याद्दोषत्रयमेवाभिधत्ते। अतएव सन्निपातहेतु अन्ये पठन्ति ॥ २ ॥

तेषामिति जङ्गालमृगाणां मध्ये एण इति कृष्णहरिण पूर्वन्तु ताम्रवर्णहरिणस्य गुण उक्तः। उक्तञ्च सुश्रुते

एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते ॥ ३ ॥

शशः स्वादुः कषायश्च लघुः पित्तकफापहः।
नातिशीतलवीर्य्यत्वाद् वातसाधारणो मतः॥४॥
नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम्।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम्॥ ५ ॥

वातसाधारण इति। वातस्य चयं शमञ्च न करोतीत्यर्थः। अतएव चरके "शशः स्वादुः प्रशस्तश्च सन्निपातेऽनिलावरे" इत्युक्तम्॥ ४॥

अदोषलमिति। यद्यपि सुश्रुतेन

नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः।
छागलस्त्वनभिष्यन्दी तेषां पीनसनाशनः॥

इत्युक्तम्। तथापि अव्यपदेश्यपित्तकफजनकत्वाददोषलमित्युक्तम्। यत्तु त्रिदोषनुद्देहधातुसामान्याच्छागलं लघ्वित्युक्तम्। तदपि ग्राम्यत्वेन प्रभूतकफजननयोग्यस्यापि छागलस्य तदजनकत्वात् समाधेयम्। यथा मधुरस्य दाड़िमस्य मधुरद्रव्यान्तरवत् कफाजनकत्वेन त्रिदोषहरत्वम्। यथा वा सहकारतैलस्य रूक्षत्वं स्वजातीयापेक्षया यथाविधस्नेहनाकर्त्तृत्वात्। यथा वा चतुर्भागावशिष्टन्तु तोयं कफहरं स्मृतमित्यत्र कफं प्रति इतरपानीयवदजनकत्वेन कफहरत्वमुच्यते। एवमन्यत्रापि एवंजातीये प्रतुदविष्किररसमज्जादौ श्लेष्महरत्वादि व्याख्येयम्। शरीरधातुसामान्यादिति मनुष्यमांसस्यापि नातिशीतगुरुस्निग्धत्वादित्यर्थः। अयञ्च बृंहणत्वे हेतुः। एतेन यद्यपि मांसान्तरमपि मांसत्वेन शरीरमांसतुल्यं तथापि तत्र गुणसामान्याभावादाजमांसवन्न सर्वरूपेण बृंहणमित्यर्थः। एतेन भङ्ग्या नृमांसस्यापि -शकत्याचार्य्येण उक्ता इत्येवावधेयम्। अन्ये तु शरीरधातु-

**मेषस्य मधुरं मांसं पित्तश्लेष्महरं गुरु ॥ ६ ॥**
**मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥ ७ ॥**
**माहिषं तर्पणं वृष्यं स्निग्धोष्णमधुरं गुरु।**
**निद्रापुंस्त्वबलस्तन्यवर्द्धनं मांसदार्ढ्यकृत् ॥ ८ ॥**

सामान्यादिति अनभिष्यन्दित्वे हेतुमाहुः। तन्न अप्रयोजकत्वात्। स्वमते तु ग्राम्यस्य बृंहणस्याप्याजमांसस्यानभिष्यन्दित्वं प्रभावादेव मन्तव्यम्। यदेव हि द्रव्यगुणद्वारा नोपपद्यते तत्रैव प्रभावकल्पनस्यैवौचित्यात् ॥ ५ ॥

मेषगुणमाह मेषस्येति। अत्र क्वचित् पुस्तके पित्तश्लेष्मकरमिति पाठो दृश्यते। स च प्रमादपाठ एव। यतः शरद्विधौ उरभ्राणामुपयोग उक्तः। यदुक्तम् उरभ्रान् शरभान् शशानिति। न च पित्तश्लेष्मकरत्वे मेषस्य तत्रोपयोगो युज्यते। अतएव चक्रेणापि

मांसं मधुरशीतत्वाद्गुरु बृंहणमाविकमिति।

चरकवचनेनाविकमांसस्य मधुरशीतत्वेन पित्तहरत्वं बोध्यमिति व्याख्यातम्। यत्तु रक्तपित्तनिदाने चरकेण वराहमहिषाविकेत्यादिना आविकस्य रक्तपित्तनिदानत्वमुक्तम्। तदपि द्रव्यान्तरसंयुक्तस्याप्याविकमांसस्य न तु केवलस्येत्यवधेयम्। अतएव सुश्रुतेऽपि "बृंहणं मांसमौरभ्रं पित्तश्लेषापहं गुरु" इत्युक्तम्। वाप्यचन्द्रस्तु पित्तश्लेष्मावहमिति पठति व्याचष्टे च। यद्यप्यौरभ्रमांसं पित्तश्लेष्मकरमत्रोक्तम्। तथापि सातिशयं पित्तं श्लेष्माणञ्च न करोतीति तदप्यनादरणीयमुक्तयुक्तेरेव ॥ ६ ॥

मेदः पुच्छो मेषभेदः स च पुच्छदेशे लम्बमानमांसपिण्डः ॥७॥

अत्र वृष्यं तथा पुंस्त्ववर्द्धनमिति च द्वयमुक्तं माषवदुभयरूपवृष्यप्राप्तिरिति बोध्यम् ॥ ८ ॥

शुष्ककासश्रमात्यग्निविषमज्वरपीनसान्।
कार्श्यं केवलवातांश्च गोमांसं सन्नियच्छति ॥९॥
हयमांसं बलकरमुष्णं मारुतनाशनम् ॥ १० ॥
गवयस्यापि मांसन्तु स्निग्धं कासनिवर्हणम्।
रसे पाके च मधुरं व्यवायस्य तु वर्द्धनम् ॥ ११ ॥
खड्गिमांसं कफघ्नन्तु कषायमनिलापहम्।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रविरूक्षणम् ॥ १२ ॥
वराहपिशितं बल्यं रोचनं स्वेदनं गुरु।
स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ॥ १३ ॥
लावो लघुकटुर्ग्राही स्वादुः शीतस्त्रिदोषनुत् ॥१४॥
तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः।
ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः ॥ १५ ॥

पित्र्यमिति। एतद्गुणकथनञ्च यद्यपि चिकित्सायां नोपयुज्यते तथापि प्रसङ्गादुक्तम् ॥ १२ ॥

पक्षिगुणानाह लाव इत्यादि। कटुरिति कटुपाकः तदुक्तं सुश्रुते लावकः कटुपाकश्चेति। लघुरिति प्रकृतिलघुः कटुपाक इत्यनेन च विपाकलघुत्वञ्चेति चरकः ॥ १४ ॥

सर्वदोषघ्न इति। सर्वग्रहणं रक्तोपलक्षितदोषग्रहणार्थमित्याहुः। अन्ये तु

तित्तिरिः स जयेत् शीघ्रं त्रीन् दोषाननिलोल्वणान्।

इतिवचनात् ग्रन्थाधिक्यात् वाताधिक्यदोषत्रयप्राप्त्यर्थं सर्वग्रहणमाहुः ॥ १५ ॥

पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः ।
मन्दवातेषु शस्यन्ते शैत्यमाधुर्य्यलाघवात् ॥१६॥
ईषदुष्णा गुरुस्निग्धा बृंहणा वर्त्तकाः स्मृताः ॥१७॥
क्रकरा लघवो हृद्यास्तथा चैवोपचक्रकाः ।
वातपित्तहरा वल्या मेधाग्निवलवर्द्धनाः ॥ १८ ॥
वर्हो दृक्श्रोत्रमेधाग्निवयोवर्णस्वरायुषाम् ।
हितो वल्यो गुरुश्चोष्णो वातघ्नो मांसशुक्रलः ॥१९
पारावतो गुरुः शोतो रक्तपित्तहरः स्मृतः ।
रसे पाके च मधुरः कषायो विषदोऽपि च ॥२०॥
तेभ्यो लघुतराः किञ्चित् कपोता वनवासिनः ।
शीताः संग्राहिणश्चैव स्वल्पमूत्रकराश्च ते ॥२१॥
कषायः स्वादुलवणो गुरुः काणकपोतकः ॥२२॥

कपिञ्जलो गौरतित्तिरिः । एतेन पूर्वोक्ततित्तिरिशब्दस्य गोवलीवर्दन्यायात् कृष्णतित्तिरिपरत्वमित्याहुः ॥ १६ ॥

क्रकरः प्रसिद्धो लावसदृशः कपिञ्जलात् स्थूलः । उपचक्रक क्रकरभेदः । कृष्णचञ्चुर्मदाविल इति डल्वणः । चकोरभेद इति तु त्रिविक्रमः ॥ १८ ॥

पारावत इति । गृहवासी पारावतः । वनवासिकपोतस्य वक्ष्यमाणत्वात् ॥ २० ॥

वनवासिनः कपोता इति वनवासिपारावता इत्यर्थः । न तु वनवासिपाण्डुकपोताः तेषां काणकपोतत्वेन अपथ्यतमत्वा दित्याहुः ॥ २१ ॥

कुक्कुटो बृंहणो वन्यः स्वेदस्वरबलावहः ।
स्निग्धोष्णोऽनिलहा वृष्यो ग्राम्यस्तद्वद्गुरुस्तु सः ॥२३
कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः ।
सन्निपातहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥ २४ ॥
शुकमांसं कषायाम्लं विपाके रूक्षशीतलम् ।
शोषकासक्षयहितं संग्राहि लघु दीपनम् ॥२५॥
गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ।
बृंहणाः शुक्रलाश्चोक्ता हंसाः पवननाशनाः ॥२६॥
शरारिवककादम्बबलाकाः पवनापहाः ।
स्निग्धाः सृष्टमला वृष्या रक्तपित्तहरा हिमाः ॥२७॥

काणकपोतो वनवासिपाण्डुकपोत इति गयदासः। अत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः। तेन त्रिदोषकरत्वं मलदूषकत्वञ्चास्य समुच्चीयत इत्याहुः ॥ २२ ॥

वन्य इति वनभवः। तद्वदिति वनकुक्कुटवत्। गुरुस्तु स इति विशेषेण ग्राम्यकुक्कुटो गुरुस्तेन वनकुक्कुटस्यापि किञ्चिद्गुरुत्वं सिद्धम्। अतएव

गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः।

इति। सामान्येन गुरूष्णत्वादिहेतूपन्यासो न विरुध्यत इत्याहुः ॥ २३ ॥

कुलिङ्गो वनचटको ग्राम्यचटकाकारः। पीतमस्तक वाऐ इति लोके। गृहकुलिङ्गो गृहवासिचटक एव ॥ २४ ॥

शकरारिः शरालिरिति लोके प्रसिद्धः। वकः स्वनामख्यातः।

कूर्मादय: स्वादुपाकरसा बल्यानिलापहा:।
शीता: स्निग्धा हिता: पित्ते वर्च्चस्या: श्लेष्मवर्द्धना:२८
कृष्ण: कर्कटकस्तेषां बल्य: कोष्णोऽनिलापह:।
शुक्रसन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा ॥२९॥

---

गोधा विपाके मधुरा कषायकटुका रसे।
वातत्तिप्रशमनी बृंहणी बलवर्द्धिनी ॥ १ ॥
शल्यक: स्वादुपित्तघ्नो लघुशीतो विषापह: ॥२॥
मूषिको मधुर: स्निग्धो व्यवायी शुक्रवर्द्धन: ॥३॥
दुर्नामानिलदोषघ्ना: कृमिदूषीविषापहा:।
चक्षुष्या मधुरा: पाके सर्पा मेधाग्निवर्द्धना: ॥४॥
जङ्गाला वातपित्तघ्नास्तीक्ष्णा बस्तिविशोधना:।

कादम्बो नीलवर्ण: कलहंस इत्युच्यते। बलाका बकभेद एव ॥ २७ ॥

---

विलेशयानां गुणमाह गोधेत्यादि ॥ १ ॥

मूषिक इति। व्यवायी अखिलं देहं व्याप्य गच्छति पाकम्। उक्तञ्च व्यवायी देहमखिलं व्याप्य पाकाय कल्पत इति। अयञ्च सरगुणस्यैव प्रकर्ष: ॥ ३ ॥

इदानीमनुक्तमांसगुणसंग्रहार्थं तत्तदुपाधिना वर्गीकृत्य वर्गभेदेन मांसगुणा वाच्या:। तत्र समासतो द्विविधा मांसजातय: जाङ्गला आनूपाश्च। तत्र जाङ्गलवर्गोऽष्टविध:।

कषायमधुराश्चैव लघवो बलवर्द्धनाः ॥ ५ ॥
विष्किरा मधुराः शीताः कषाया लघुपाकिनः॥६॥
प्रतुदाः कषायमधुराः श्लेष्मपित्तहरा हिमाः ।
बद्धमूत्रमला रूक्षाः फलाहारानिलावहाः ॥ ७ ॥

जङ्गाला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा विलेशया ग्राम्याश्चेति। तत्र एणहरिणतरक्षुप्रभृतयो जङ्गालाः। प्रसस्तजङ्घावत्त्वेनैषा संज्ञा जङ्घालशब्दस्य वेगवति रूढ़ः। चञ्चुचरणाभ्यां विकीर्य्य भक्षणाद्विष्किराः। ते च वर्त्तकमयूरकुक्कुटादयः। तथा प्रतुद्य बहुधा अभिहत्य भक्षयन्तीति प्रतुदाः। ते च कोयष्टिकशारिकाभृङ्गराजशुकप्रभृतयः। सिंहव्याघ्रादयो गुहाशयाः। प्रसह्य हठादाकृष्य भक्षयन्तीति प्रसहाः। ते च काककङ्कुररश्येनगृध्रप्रभृतयः। प्रायः पर्णवति वृक्षे चरन्तीति पर्णमृगाः। ते च वृक्षशायिका वानरमानुयासर्पप्रभृतयः। वृक्षशायिका वृक्षमूषिकाः कटा इति प्रसिद्धाः। विले शेरते विलेशयास्ते च शल्यकगोधामूषिकप्रभृतयः। प्रायो ग्रामे चरन्तीति ग्राम्याः। ते च छागमेषादयः। आनूपवर्गस्तु पञ्चविधः। तद्यथा कूलचराः प्लवाः कोषस्थाः पादिनो मत्स्याश्चेति। कूले पानीयसमीपे चरन्तीति कूलचराः। ते च गजगवयमहिषप्रभृतयः। जले प्लवन्तीति प्लवाः। ते च हंससारसक्रौञ्चचक्रवाकप्रभृतयः। कोषे तिष्ठन्तीति कोषस्थाः। ते च शङ्खशुक्तिशम्बूकप्रभृतयः। पादवन्तः पादिनः। ते च कूर्म्मकुम्भीरकर्कटप्रभृतयः। मत्स्याः प्रसिद्धाः। एतेषां क्रमेण सामान्यगुणं निर्दिशन्नाह जङ्गाला इत्यादि ॥ ५ ॥

फलेनाहारीभूतेनानिलमावहन्तीत्यर्थः। फलाहारा मरुत्करा

शकः

गुहाशया वातहरा नेत्रगुह्यविकारिणाम्।
हिता गुरूष्णमधुराः स्निग्धा मांसाशिनोऽधिकम्॥८
प्रसहाः स्वादुवीर्य्योष्णास्तेषां मांसाशिनस्तु ते।
ते शोषभस्मकोन्मादे हिताः क्षीणे विशेषतः॥९॥
दृक्शुक्रास्रहितः पर्णमृगः स्वादुर्गुरुस्तथा।
सृष्टमूत्रपुरीषश्च कासार्शःश्वासनाशनः॥ १० ॥
बिलेशया वातहरा बृंहणा रसपाकयोः।
मधुरा बद्धविण्मूत्रा वीर्य्योष्णाश्च प्रकीर्त्तिताः॥११
ग्राम्या वातहराः सर्व्वे बृंहणाः कफपित्तलाः।
मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः॥ १२ ॥
कूलचरा मरुत्पित्तहरा वृष्या बलावहाः।
मधुरस्निग्धशीताश्च मूत्रलाः श्लेष्मलास्तथा॥१३॥
प्लवा वृष्या हिमाः स्निग्धा रक्तपित्तानिलापहाः।
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः॥ १४ ॥
कोषस्थाः पादिनश्चैव स्निग्धाः शीतानिलापहाः।

इति केचित् पठन्ति। अत्र स्वजात्यपेक्षयैव रौक्ष्यं न मसूरादिवत्। एवमनिलावहत्वेनापि वातहरत्वे स्वजात्यपकृष्टतां सूचयतीति प्रागेव व्याख्यातम्॥ ७॥

वातहरा इत्यनेन पित्तश्लेष्मकर्त्तृत्वं सूचयति। तथा चकारात् कासश्वासकार्श्यहरत्वञ्च बोध्यम्। उक्तञ्च वातं हन्युः श्लेष्मपित्ते कुर्य्युः स्निग्धाः कासश्वासकार्श्यापहाः स्युरिति॥ ११॥

अनूपानां गुणमाह कूलचरा इति॥ १३॥

वर्च्चस्याः मधुरा वृष्याः पित्तघ्नाः कफकारकाः ॥१५॥
मत्स्याः स्निग्धोष्णमधुरा वातजिन्मललोमनाः।
पित्तमांसबलश्लेष्मशुक्राभिष्यन्दकारकाः ॥ १६ ॥
रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्त्तिजित्।
कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् ॥१७॥
शकुलो मधुरो रुच्यः कषायो विषदो लघुः ॥१८॥
शिलिन्दः श्लेष्मलो बल्यो विपाके मधुरो गुरुः।
वातपित्तहरो वृष्य आमवातकरो मतः ॥ १९ ॥
आड़िमत्स्यो गुरुः स्निग्धः स्वादुर्वृष्यो बलप्रदः॥२०॥
इल्लिसो मधुरः स्निग्धः पित्तश्लेष्मप्रकोपणः।
नृणां व्यवायनित्यानां हितो वह्निविवर्द्धनः ॥२१॥
एलङ्गः स्निग्धो मधुरो गुरुविष्टम्भिशीतलः॥२२॥
पर्वतो मधुरः स्निग्धः कषायानुरसो गुरुः ॥ २३॥
भाकुटो मधुरो हृष्यः कषायानुरसो गुरुः ॥२४॥

यद्यपि मत्स्या द्विविधाः सामुद्रा नादेयाश्च। तत्र सामुद्राणां तिमिप्रभृतीनां प्रायशोऽनुपयोगात् तानुपेक्ष्य नादेयानां गुणा वाच्याः। नादेयशब्दश्च समुद्रभिन्नजलभवमात्रोपलक्षकः। तेन सरस्तड़ागजानामपि ग्रहणम्। तत्र मत्स्यानां सामान्यगुणं निर्दिशन्नाह मत्स्या इति। मललोमना इति मलानुलोमनाः सृष्टमला इत्यर्थः। अतएव सृष्टविण्मूत्रमारुता इति माधवकरः ॥ १६ ॥

मत्स्यभेदेन गुणभेदं दर्शयन्नाह रोहित इति ॥ १७ ॥

शको-

पाठीनः श्लेष्मलो वृष्यो निद्रालः पिशिताशनः।
दूषयेद्रक्तपित्तञ्च कुष्ठरोगं करोत्यसौ ॥ २५ ॥
वर्म्मिमत्स्यस्तथा वृष्यो मधुरो रसपाकतः ॥ २६ ॥
कुलिशः कषायमधुरः कुञ्जकः कफपित्तहा ॥२७॥
शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपणी ॥२८॥
मद्‌गुरो मधुरो वृष्यो विपाके मधुरो गुरुः ॥२९॥
गुत्थमत्स्यो गुरुः स्निग्धः श्लेष्मलो वातनाशनः ॥३०
कवय्यः स्निग्धमधुराश्चलदङ्गो गड़ोयथा ॥३१॥
क्षुद्रमत्स्यास्तु लघवो ग्राहिणो ग्रहणीहिताः ॥३२॥
मत्स्यकूर्मखगाण्डानि स्वादुवाजीकराणि च ॥३३॥
चरः शरीरावयवः स्वभावो धातवः क्रियाः।

कुलिशः कुड़िश इति प्रसिद्धः। कुञ्जक इञ्जाकः। अन्ये व्याघ्रमत्स्यमाहुः। स च आड़िमत्स्याकृतिर्ह्रस्वकायः॥ २७॥

गुत्थमत्स्यो देशान्तरे प्रसिद्धः। अन्ये तु चन्द्रकमाहुः ॥३०॥

चलदङ्गश्चेङ्ग इति प्रसिद्धः। गड़ो यथेति रूक्ष इत्यर्थः ॥३१॥

इदानीं गौरवलाघवज्ञानार्थं ये ये विवेचनीयास्तानाह संक्षेपेण चर इति। अस्मिन्निति अन्नपानगुणाधिकारे। चर्य्यत इति चरो देशो भक्ष्यश्च। चर गतिभक्षणयोरित्यतो निष्पन्नत्वात् सामान्येन गृह्यते। कस्मिन् देशेऽयं विहरति धन्वनि अनूपे जले वियति वा किं पुनरयमाहरति गुरु लघु शीतमुष्णं स्निग्धं रूक्षं वा तद्विहाराहारगुणभावितशरीरधातवो मृगस्य पक्षिणो वा तत्तद्गुणमेव मांसमिति। तथा हि चरकः

लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते॥३४

चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः।

इति। भक्ष्यसंविधिर्भक्षणम्। तत्रानूपजलाकाशधन्वाद्य इत्यनेन गतिरूपश्चर उच्यते। भक्ष्यसंविधिरित्यनेन भक्ष्यरूपश्चर उच्यते। एतत् उदाहरणं यथा।

जलजानूपजाश्चैव जलानूपचराश्च ये।
गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः।
लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः॥

इति। अत्र जलजत्वेन च जले वा अनूपे वा गतिरेव दर्श्यते। न हि जलादौ ये जातास्ते प्रायोऽन्यत्रावतिष्ठन्ते। प्रायः काकमद्गुप्रभृतयस्तद्ग्रहणार्थमाह जलानूपचराश्च य इति। एतेन सामान्येन जले प्रायोऽवस्थानादिह जलचरत्वम्। एवमनूपचराद्यपि ज्ञेयम्। गुरुभक्ष्या इत्यादिना तु भक्ष्यरूपचरकृतगुणकथनम्। धन्वजा धन्वचारिण इत्यपि गतिरूपचरगुणकथनम्। अत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः। तेन बाहुल्येन आकाशचारिणामपि श्येनादीनां स्वजातिप्रसहान्तरापेक्षया लाघवं बोध्यम् आकाशस्य लघुत्वात्। ये तु ब्रुवते आकाशचारिणां गौरवलाघवानियमादकथनमिति। तन्न। तथा सति आकाशस्य अप्रयोजनकत्वेन चरोऽनूपजलाकाशधन्वाद्य इत्याकाशकथनं निष्प्रयोजनं स्यात्। एवञ्च देशविशेषाद्भक्ष्यविशेषाच्च मृगादीनां गौरवं लाघवं वा निर्देश्यमिति चरपरीक्षाप्रयोजनमिति भावः। शरीरावयव इति शरीरावयवपरीक्षाप्रयोजनम्। यथा

ऊरुग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम्। इति।
पक्षिणः सक्थिमांसाद्गुरुतरं क्रोड़स्कन्धशिरस्सदम्॥

इत्यादि। स्वभाव इति स्वभावस्तद्‌द्रव्यजातिप्रबन्धः स्वाभाविको धर्म्मः। तत् प्रतिनियतं गुरुलाघवम्। यथा

स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः।

इत्यादि। धातव इति शोणितादयः। तदुदाहरणञ्च

धातूनां शोणिताद्यानां गुरु विद्यात् यथोत्तरम्।

इति। क्रियेति क्रिया चेष्टा तद्‌यथा

अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः।

इति। विशिष्यन्त इति लघुत्वेन विशिष्टा भवन्तीत्यर्थः। लिङ्गमिति लिङ्गं स्त्रीत्वादि यदाह

गौरवं लिङ्गसामान्ये पुंसां स्त्रीणान्तु लाघवम्।

इति। लिङ्गसामान्य इति जातिसामान्ये। तथाच हारीतः

चतुष्पादेषु लघ्वी स्त्री विहगेषु लघुः पुमान्।

इति। जतूकर्णेऽप्युक्तम्

वन्ध्या छागी प्रशस्ता स्यादभावे वर्करीमता।

तथाच पराशरः।

चतुष्पात्सु स्त्रियो ग्राह्याः पुंमांसो विहगेषु च।

इति। यत्तु भाषितं काशिराजेन छागमेव नपुंसकं तदनार्षं सर्वतन्त्रविरोधात्। प्रमाणमिति

महाशरीरा गुरवः स्वजातौ लघवोऽन्यथेति।

संस्कारोऽन्यथात्वं तद्‌यथा मांसरसगुणनिर्देशे सुश्रुतः

स्नेहगोरसधान्याम्लफलाम्लैरन्वितञ्च यत्।

यथोत्तरं गुरुं विद्यादिति। चरकेऽपि

गुरूणां लाघवं विद्यात् संस्कारात् सविपर्य्ययम्।

व्रीहेर्लाजा यथाच स्युः शक्तूनां सिद्धपिण्डकाः॥

इति। सविपर्य्ययमिति संस्काराल्लघूनामपि गौरवं विद्यादित्यर्थः। गुरोरपि व्रीहेर्लाजा लघव इत्यर्थः। लघूना-

क्लशात् स्वयं मृतान्मांसं विषव्याड़हतादपि।
बालं तोयाग्निविक्लिन्नं रोगिशुष्कं न पूजितम्॥
अगोचरभृतं यच्च मेध्यं वृद्धं तथैव च।
सिद्धं पर्य्युषितं तद्वद्दुर्गन्धि ग्रथितञ्च यत्॥
क्रिमिजग्धञ्च यन्मांसमायुष्कामो विवर्जयेत्॥३५॥
एभ्योऽन्येषामुपादेयं मांसं दोषविवर्जितम्।
लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः॥
मयूरवर्म्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह॥ ३६॥

शक्तूनां सिद्धपिण्डका गुरव इत्यर्थः। सिद्धपिण्डका इत्यग्निपाचिताः पिण्डाः। मात्रेति मात्रावशाद् गुरूणामपि लघुत्वं लघूनामपि गुरुत्वमित्यर्थः। तदुक्तम्।

अल्पादाने गुरूणान्तु लघूनाञ्चातिसेवने।
मात्रा कारणमुद्दिष्टं द्रव्याणां गुरुलाघवे॥

इति। मात्रा चेति चकारेण वह्निरनुक्तोऽपि मात्रायाः कारणभूतः समुच्चीयते। तेन मात्राया भूयस्त्वाल्पीयस्त्वेनाग्निरपि परीक्ष्यत इत्यर्थः। तेनाग्निबलमभिसमीक्ष्य भूयसी अल्पीयसी वा मात्रा कार्य्येति केचित्। एवं चरादिकं परितः सर्वतोभावेन विचार्य्य मांसादिद्रव्याणां गुरुलाघवं वाच्यमिति पिण्डार्थः॥ ३४॥

यादृशं मांसमनुपादेयं तदाह क्लशादिति। अगोचरभृतमित्यानूपं धन्वदेशे पुष्टम्। मेध्यमिति मेदुरम्। सिद्धं पर्य्युषितमिति पक्वं सत् पर्य्युषितम्॥ ३५॥

उपादेयमाह एभ्य इति। सारङ्गो गौरहरिणः। वर्म्म शकलं तदस्यास्तीति वर्म्मी रोहितः तदुक्तं चरके रोहितो मत्स्या-

पोताधानास्तु सर्वेषां सुस्निग्धा लघुदीपनाः ।
महाप्रमाणा गुरवः क्रियावन्तोऽल्पचेष्टिनः ॥३७॥
मत्स्याण्डानि विशेषेण वातपित्तहराणि च ।
ज्ञेयानि हृद्यरुच्यानि कटुपाकीनि चैवहि ॥३८॥
हंसवीजं परं बल्यं बृंहणं वातनाशनम् ।
पाके लघुतरं प्रोक्तं सर्वामयविवर्जितम् ॥ ३९ ॥
विष्टम्भिनः शुष्कमत्स्या अबल्या दुर्जरा मताः ।
सिध्मला ग्रहणीदोषशमनी पवनापहा ॥ ४० ॥

इति मांसादिवर्गः ।

---

शाकानि प्रायशस्तानि विष्टम्भीनि गुरूणि च ।
रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ॥ १ ॥
पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद् यथोत्तरम् ॥२॥

नामिति । ब्रह्मदेवोऽपि वर्मी महाशकलो रोहितभेदः न तु सर्पाकारमत्स्य इत्याह ॥ ३६ ॥

इति मांसादिवर्गः ।

---

अत्र व्यञ्जनेषु श्रेष्ठत्वात् प्रथमं मांसगुणमभिधाय अनन्तरं शाकगुणे वाच्ये प्रथमं शाकानां सामान्यगुणमाह शाकानीति ॥१॥

तत्र शाकभेदेन गुणभेदमभिधातुं शाकभेदमाह पत्रमिति । संस्वेदजमिति छत्रकादि ॥ २ ॥

जीवन्ती सर्वदोषघ्नी चक्षुष्या मधुरा हिमा ॥३॥
तण्डुलीयमसृक्पित्तविषनुत् स्वादुपाकतः ॥४॥
वास्तूकस्तु सरो हृद्यो दोषनुत् पाकतो लघुः।
सक्षारः क्रिमिहा मेध्यो रुच्योऽग्निबलवर्द्धनः ॥५॥
लघुपत्री तु या चिल्ली सा वास्तूकसमा मता ॥६॥

तत्र शाकेषु जीवन्ती श्रेष्ठा। उक्तं हि वाग्भटे

वरा शाकेषु जीवन्ती सार्षपस्त्ववरः स्मृतः।

इति। तद्गुणमाह जीवन्तीति। जीवन्ती स्वनामख्याता स्वर्णनाड़ इति चक्रः। सा द्विधा मधुरा अमधुरा च। तत्र मधुराया एव त्रिदोषहन्तृत्वम्। अमधुरायास्तु वातपित्तहन्तृत्वमेव। तदुक्तं हृद्वाग्भटे

चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा।
शाकानां प्रवरा न्यूना द्वितीया किञ्चिदेव तु॥

तत्रामधुरायाः किञ्चिन्न्यूनत्वेन न त्रिदोषहरत्वमिति बोधयति। अतएवाह चरकः

भण्डी शतावरीशाकं बला जीवन्तिजञ्च यत्।
पर्वण्याः पर्वपुष्पाश्च वातपित्तहरं मतम्॥ इति॥ ३॥

तण्डुलीयं क्षुद्रमारिषः। पाकत इत्यनन्तरं चकारो लुप्तनिर्दिष्टो ज्ञेयः। तेन रसतोऽपि स्वादुरित्यर्थः॥ ४॥

दोषनुदिति। त्रिदोषहरः पाकतो लघुरिति कटुरित्यर्थः। उक्तञ्च

कटुर्विपाके क्रिमिहा मेधाग्निबलवर्द्धनः।
सक्षारः सर्वदोषघ्नो वास्तूको रोचनः परः।

चरकेऽपि त्रिदोषघ्नत्वमुक्तम्॥ ५॥

मूलकपोतिका कण्ठ्या सर्वदोषहरी लघुः।
कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ॥७॥
महत्तद्गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् ॥८॥
तदेव स्निग्धसिद्धन्तु वातनुत् कफपित्तकृत् ॥९॥
शुष्कन्तु शोथशमनं गरदोषहरं लघु ॥ १० ॥
तत्फलं कफवातघ्नं तत्पुष्पं कफपित्तजित् ॥११॥
हिलमोची तु कुष्ठघ्नी भेदनी कफपित्तनुत् ॥१२॥
उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा।

चिल्ली गौरवास्तूकः। चेत्रवास्तूक इत्यन्ये ॥ ६ ॥

मूलकस्य बालमहदामसिद्धशुष्कभेदेन गुणमाह मूलकपोतिकेति। मूलकपोतिका अतिबालमूलकम्। अत्र स्निग्धसिद्धाया एव मूलकपोतिकायाः सर्वदोषहरत्वम् अन्यथा तु दोषकृत्त्वम् यदाह मूलकगुणे वाग्भटः

वातश्लेष्महरं शुष्कं सर्वमामन्तु दोषलम्।

इति। अत्र सर्वमिति बालं वृद्धञ्च। सर्वपदञ्च पूर्वेण परेण च सम्बध्यते। तेन सर्वदोषहरस्यापि बालमूलकस्यामावस्थायां दोषलत्वं न तु वृद्धस्यैवेत्यरुणः ॥ ७ ॥

महतः परिणतस्य मूलकस्य गुणमाह महदिति। आममित्यनग्निपक्वमिति निबन्धसंग्रहः ॥ ८ ॥

शुष्कमूलकगुणमाह शुष्कमिति। अस्य च वातकफहरत्वं ज्ञेयम्। यदाह

बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम्।
स्निग्धसिद्धं विशुष्कन्तु मूलकं कफवातजित् ॥ १० ॥

मूलकफलपुष्पयोर्गुणमाह तत्फलमिति ॥ ११ ॥

स्वादुपाकरसा वृष्या वातपित्तमदापहा ॥ १३ ॥
सुनिषस्सन्तु संग्राहि अविदाहि त्रिदोषनुत् ॥१४॥
मारिषो मधुरः शीतो विष्टम्भी गुरुपित्तनुत् ॥१५॥
पालङ्क्या वद्वविरामूत्रा कफघ्नी तण्डुलीयवत्॥१६॥
कासमर्दोऽग्निदः कण्ठ्यः
स्वादुस्तिक्तस्त्रिदोषनुत् ॥१७॥
कालशाकं गरश्लेष्मशोथघ्नं दीपनं कटु ॥ १८ ॥
कलायपत्रं मधुरं रूक्षं भेदि च वातलम् ॥१९॥
सतीलकं त्रिदोषघ्नं कटुपाकं सतिक्तकम् ॥२०॥

सुनिषस्सकं सुसुनिया इति ख्यातम्। ब्रह्मदेवस्तु तल्लक्षणमाह ।

चाङ्गेरीसदृशैः पत्रैः सुनिषस्सं चतुर्दलम् ।
शाको जलान्विते देशे चतुष्पत्रीति सूच्यते ॥ १४ ॥

तण्डुलीयवदित्यनेन मधुररसपाकत्वादिकमतिदिशति। अस्याश्च कफहरत्वं रूक्षत्वादिप्रकर्षात् ॥ १६ ॥

अस्य च त्रिदोषहरत्वेऽपि विशेषात् पित्तहरत्वं बोध्यम्। यदाह सुश्रुतः ।

मधुरः कफवातघ्नः पाचनः कण्ठशोधनः ।
विशेषतः पित्तहरः सतिक्तः कासमर्दक इति ॥ १७ ॥

कलायस्त्रिपुटकलायः । सतीलाख्यस्य वक्ष्यमाणत्वात् ॥१८॥

सतीलको वर्त्तुलकलायः । अस्य च त्रिदोषहरत्वेऽपि विशेषात् कफपित्तहरत्वं ज्ञेयम् ।

कफपित्तहरं तिक्तं शीतं कटु विपच्यते ।

षाणकं दुर्जरं स्वादु कौसुम्भन्तु कफापहम् ॥२१॥
पुनर्नवायुग्ममुष्णवीर्य्यं रसायनं सरम् ।
कफानिलामदुर्नामव्रध्नशोथोदरापहम् ॥ २२ ॥
कञ्चटं तिक्तकं ग्राहि रक्तपित्तापहं स्मृतम् ॥२३॥
चाङ्गेरी तु कषायोष्णा मधुरा वह्निदीपनी ।
साम्ला वातकफौ हन्ति ग्रहण्यर्शोविकारनुत् ॥२४
चुक्रकं दुर्जरं भेदि अम्लं पित्तकरं गुरु ॥ २५ ॥
कलम्बिका गुरुर्वृष्या काषाया स्तन्यवृद्धिदा ॥२६॥
सार्षपं गुरु शाकञ्च बद्धमूत्रं त्रिदोषकृत् ॥ २७ ॥
ग्रीष्मसुन्दरकस्तिक्तो रोचनः कफपित्तनुत् ॥२८॥
नाड़ीचः पिच्छिलः शीतो विष्टम्भी वातकोपनः ।
रक्तपित्तहरः स्वादुर्मण्डूक्याद्याश्च तद्गुणाः ॥२९॥
पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ।
फलं तस्य त्रिदोषघ्नं मूलं तस्य विरेचनम् ॥३०॥
निम्बः पित्तकफच्छर्दिव्रणहृल्लासकुष्ठनुत् ॥३१॥
पर्पटस्तु सवेत्राग्रस्तिक्तः पित्तकफापहः ॥ ३२ ॥

इति चरकसंवादात् ॥ २० ॥

स्वाद्विति । रसतः पाकतश्च । कफापहमिति कफहरम् ॥२१

चाङ्गेरीगुणे साम्लेति ईषदम्ला ॥ २४ ॥

मण्डूकी मण्डूकपर्णी मणिमणीतिख्याता । आदिशब्दात् गोजिह्वादीनां ग्रहणम् । गोजिह्वा दार्वीशाकः ॥ २९ ॥

त्रिदोषशमनी वृष्या काकमाची रसायनी।
नात्युष्णा शीतवीर्य्या च भेदनी कुष्ठनाशिनी ॥३३
वायुं वत्सादनी हन्यात् पित्तघ्नी तु सुवर्च्चला ॥३४
राजक्षवकशाकन्तु त्रिदोषशमनं लघु।
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ॥३५॥
दीपनाः कफवातघ्नाश्चिरविल्वाङ्कुराः सराः ॥३६॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः।
कषायस्तम्भनाः शीता हिताः पित्तातिसारिणाम्३७
अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥३८॥
वार्त्ताकं कटु तीक्ष्णोष्णं मधुरं कफवातजित्।

वत्सादनी गुडूची। अस्याश्च पित्तकफहन्तृत्वं बोध्यम्। तदुक्तं सुश्रुते।

अटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः।
किराततिक्तसहितास्तिक्ताः पित्तकफापहाः॥

इति। अन्ये तु पत्रप्रधाने गुडूचीशाके तिक्तरसप्राधान्यात् पित्तकफहरत्वमेवेत्याहुः। सुवर्च्चला सूर्य्यावर्त्तभेदः। अन्येतु मारिषसदृशनालमार्त्तगलसदृशपत्रं लम्फकमाहुः॥ ३४॥

राजक्षवको दुग्धिका। अन्येतु राजक्षवको वृहत्पत्रः क्षवथुकारक इत्याहुः॥ ३५॥

चिरविल्वः करञ्जकः॥ ३६॥

अवलुजो वागुजोत्पन्नम्॥ ३८॥

जीर्णमिति परिणतम्। अत्र जीर्णं पित्तलमित्यनेना-परिणतस्यापि पित्ताविरोधित्वमिति बोधयति। अतएव माध-

रोचनं वह्निजननं जीर्णन्तु पित्तलं मतम् ॥३९॥
कण्डूकुष्ठक्रिमिघ्नानि कफवातहराणि च।
फलानि वृहतीनान्तु कटुतिक्तलघूनि च ॥४०॥
कारवेल्वः सकर्कोटो रोचनः कफपित्तनुत् ॥४१॥
कुष्माण्डकं पित्तहरं बालं मध्यं कफावहम्।
पक्वं लघूष्णं सक्षारं दीपनं वस्तिशोधनम् ॥
सर्वदोषहरं हृद्यं पथ्यञ्चेतोविकारिणाम् ॥४२॥
सक्षारा मधुरा रूक्षा रुच्या वातकफापहा।

वेन वार्त्ताकगुणे हृद्यं रुच्यमपित्तलमित्युक्तम्। अन्ये तु पठन्ति

सा बाला कफपित्तघ्नी पक्वा सक्षारपित्तला।
सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी ॥ ३९ ॥
अन्ये तु कण्टकारीफलं पृथगेव पठन्ति ॥ ४० ॥

कारवेल्वः स्वनामख्यातः। कर्कोटो वृहत्कर्कोटोऽल्पकर्कोटी च ॥ ४१ ॥

कुष्माण्डस्य बालाद्यवस्थाभेदेन गुणमाह कुष्माण्डकमिति। मध्यस्य कफावहत्वेन वातपित्तहरत्वं सूच्यते। यदाह वाग्भटः कुष्माण्डं वातपित्तजित्। अतएव कफमावहति करोतीति कफावहमिति डह्लनोऽप्याचष्टे। अयन्तु सौश्रुतः श्लोकः। पक्वमित्यत्र शुक्लमिति पठ्यते। तथापि स एवार्थः। पक्वस्य शुक्लवर्णत्वात् चक्रेण स्पष्टार्थं पक्वमित्युक्तम्। सर्वदोषहरमिति सर्वग्रहणं रक्तोपसंग्रहार्थम्। सर्वदोषसहमित्यन्ये पठन्ति। अत्रायमर्थः न करोति नवा शमयतीत्यर्थ इति निबन्धसंग्रहकृतः। चेतोविकारा अपस्मारादयः ॥ ४२ ॥

अश्मरीभेदनी गुर्वी नाडी कुष्माण्डसम्भवा ॥४३॥
एर्वारुकं सकर्कारु सुपक्वं कफवातकृत् ।
सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् ॥४४॥
बालं सनीलं त्रिपुषं तेषां पित्तहरं स्मृतम् ।
तत् पाण्डुकफकृज्जीर्णमम्लं वातकफापहम् ॥४५॥
शीर्णवृन्तं कफहरं सक्षारं मधुरं हि तत् ।
भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ॥ ४६ ॥
अलावु: शीतला रूक्षा गुर्वी वर्च्चःप्रभेदिनी ॥४७॥
अलावुनाड़िका गुर्वी मधुरा पित्तनाशिनी ।
वातश्लेष्मकरी रूक्षा शीतला मलभेदिनी ॥४८॥
तिक्तालावुरहृद्या तु वामनी वातपित्तजित् ॥४९॥

कफवातकृदिति कफवातकरम्। एर्वारुकं लोमशाकं कर्कोटीति डल्लनः। राजकर्कोटीत्यन्ये। फुटीति संज्ञया गौड़े प्रसिद्धमिति त्रिविक्रमः। कर्कारु कर्कोटीभेदः ॥ ४४ ॥

त्रिपुषं मायाम्बु। सनीलमिति नीलावस्थम्। बालमित्यभिनवम्। पाण्डुिति पाण्डुवर्णं मध्यावस्थमित्यर्थः। कफकृत् कफकरं जीर्णमिति परिणतम् ॥ ४५ ॥

शीर्णवृन्तं सुखाशकमिति चक्रः। अत्र शीर्णमित्यादिः मधुरं हितमित्यन्तो बालस्य गुणः। भेदनं दीपनं हृद्यमिति मध्यस्य आनाहाष्ठीलनुल्लघ्विति जीर्णस्येति निबन्धसंग्रहः। अत्राष्ठीला मूत्राष्ठीला न तु वाताष्ठीला। अस्या वातप्रशमकत्वादिति चक्रः ॥ ४६ ॥

कुमुदोत्पलनालास्तु सपुष्पाः सफलाः स्मृताः।
शीताः स्वादुकषायाश्च कफमारुतकोपनाः ॥५०॥

———

हस्तिमध्वालुकादीनि रक्तपित्तहराणि च।
गुरूणि स्वादुशीतानि स्तन्यशुक्रकराणि च ॥१॥
विदारीकन्दो बल्यश्च वातपित्तहरश्च सः।
मधुरो बृंहणो वृष्यः शीतः स्वर्य्योऽतिमूत्रलः ॥२॥
वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी।
महती सैव हृद्या च मेधाग्निबलवर्द्धिनी ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥३॥
तरूटविसशालूकक्रौञ्चादनकशेरुकम्।
शृङ्गाटकाङ्कालोड्यञ्च गुरु विष्टम्भि शीतलम् ॥४॥

कन्दगुणमाह हस्तीत्यादि। हस्त्यालुकं मध्वालुकञ्च स्वनामख्यातम् ॥ १ ॥

विदारीकन्दो द्विविधः अल्पबहुक्षीरभेदेन। तत्राल्पक्षीरः हस्तिपादक इति ख्यातः। बहुक्षीरस्तु दीर्घमूलस्तस्य कन्दो भूमिकुष्माण्ड इति लोके ॥ २ ॥

महदल्पभेदेन शतावरी द्विविधा तस्या एवेति शतावर्य्या इत्यर्थः ॥ ३ ॥

तरूटकं कह्लारकन्दः। क्रौञ्चादनं घेचुलुका। अङ्कलोड्यं क्षुद्रोत्पलकन्दः। शृङ्गाटकं फलमपि कशेरुकादिकन्दगुण-

पिण्डालुकं कफहरं गुरु वातप्रकोपणम् ॥ ५ ॥
वज्राख्यकन्दः श्लेष्मघ्नः कटुपाकश्च पित्तकृत् ॥६॥
वेणोः करीराः कफला मधुरा रसपाकतः।
विदाहिनो नातिबलाः सकषाया विरूक्षणाः ॥७॥
ऐन्दुकश्च नदीमाषं विषदं गुरु शीतलम् ॥ ८ ॥
शूरणो दीपनो रुच्यः कफघ्नो विषदो लघुः।
विशेषादर्शसां पथ्यो भूकन्दस्त्वतिदोषलः ॥९॥
माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम्।१०॥
कदल्या वलकृन्मूलं वातपित्तापहं गुरु ॥ ११ ॥
आमवातकरी कञ्ची कफकृद्गुरुपिच्छला ॥१२॥

सामान्यादिहैव पठ्यते। कशेरुकं द्विविधं क्षुद्रं महच्च। तत्र क्षुद्रं चिञ्चोटक इति ख्यातं महत्तु राजकशेरुकम् ॥ ४ ॥

कफं हरतीति कफहरम् ॥ ५ ॥

वज्राख्यकन्दः सुरेन्द्रकन्दः चामघास इति लोके ॥ ६ ॥

अत्र केचिन्मधुररसपाकस्य विदाहित्वं नोपपद्यत इति कटुका रसपाकत इति पठन्ति। अन्ये तु मधुरस्यापि विदाहित्वप्रभावादेव समर्थयन्ति ॥ ७ ॥

ऐन्दुकं निच्चारम्। नदीमाषकम् उन्दीमान इति ख्यातम् ।८॥

शूरणो वनकन्दः। भूकन्द इति ग्राम्यकन्दः। अयमेव सुश्रुते स्थलकन्दसंज्ञया पठ्यते। भूकन्दः प्रावृडुद्भवः प्रसिद्ध एवेत्यरुणः ॥ ९ ॥

वलकृत् वलकरम् ॥ ११ ॥

कफकृत् कफकरी ॥ १२ ॥

वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः ।
मेहकुष्ठक्रिमिहरो बल्यो वृष्यो रसायनः ॥१३॥
तालस्य नारिकेलस्य खर्जूरस्य शिरांसि च ।
कषायस्निग्धमधुरबृंहणानि गुरूणि च ॥ १४ ॥
गुवाकस्य शिरस्तद्वद् भेदनं मदकारकम् ॥१५॥
बालं ह्यनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ।
कन्दं विवर्जयेत् सर्वं यो वा सम्यक् न रोहति ॥१६॥
शणस्य कोविदारस्य कर्वूदारस्य शाल्मलेः ।
पुष्पं संग्राहि शस्तञ्च रक्तपित्ते विशेषतः ॥१७॥
वृषागस्त्ययस्य पुष्पाणि क्षयकासापहानि च ॥१८॥
आगस्त्यं नातिशीतोष्णं नक्तान्धानाञ्च शस्यते ॥१९॥
राजवृक्षस्य निम्बस्य मुष्ककार्काशनस्य च ।
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ॥ २० ॥
सतिक्तमधुरं शीतं पद्मं पित्तकफापहम् ॥ २१ ॥

वाराहकन्दो वक्कालुक इति ख्यातः ॥ १३ ॥

मूलप्रसङ्गेनाग्रगुणमपि केषाञ्चिदाह तालस्येति ॥ १४ ॥

हेयं कन्दमाह बालमिति । न रोहति न जायते ॥ १६ ॥

पुष्पशाकगुणमाह शणस्येति ॥ १७ ॥

आगस्त्यो वङ्गसेनः । तयोर्मध्ये आगस्त्यस्य विशेषगुणमाह आगस्त्यमिति ॥ १९ ॥

राजवृक्षः स्वर्णालुः । निबन्धसंग्रहस्तु रक्तवृक्षस्येति पठित्वा रक्तचन्दनस्येति व्याचष्टे । मुष्कको घण्टापारुली ॥ २० ॥

मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम्॥२२
सिन्दुवारं जीवनीयं हिमं पित्तविनाशनम् ।
यथावृत्तं विजानीयात् कुसुमस्य गुणागुणान् ॥२३॥
छत्रकास्तु पलालेक्षुकरीषचितिरेणुजाः ।
सर्वे संस्वेदजाः शीताः कषायाः स्वादुपिच्छिलाः ॥
गुरवश्छर्द्यतीसारज्वरश्लेष्मामयप्रदाः ॥ २५ ॥
कर्कशं परिजीर्णञ्च क्रिमिजुष्टमदेशजम् ।
विवर्जयेत् पत्रशाकं यदकालविरोहि च ॥ २६ ॥
सतीलो वास्तूकश्चुच्छुचिल्लीमूलकपोतिका ।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥ २७ ॥

धान्येषु मांसेषु फलेषु चैव
शाकेषु चानुक्तमिहाप्रमेयात् ।

सिन्दुवारं निर्गुण्डीपुष्पमिति डल्लन उपसंहरति ॥ २३ ॥

याद‍ृशं पत्रशाकं हेयं तदाह कर्कशमिति ॥ २५ ॥

उक्तेषु प्रधानतमं शाकमाह सतील इति । सतीलो वर्त्तुलकलायः । चुच्छु चेउ इति लोके । चिल्ली चेत्रवास्तूकः । मण्डूकपर्णी मणिमणीतिलोके । ब्राह्मीति डल्लनः । जीवन्ती स्वर्णनाड इति चक्रः । डल्लनस्तु जीवन्ती जीवा तण्डुलीयसदृशीत्याचष्टे ॥ २७ ॥

द्रव्याणामानन्त्यादनुक्तद्रव्यगुणज्ञानोपायमाह धान्येष्विति । फलानि वक्ष्यमाणानि । चकाराद्‌द्रवद्रव्यकृतान्नादीनां समु-

आस्वादतो भूतगुणैर्गृहीत्वा
तदादिशेद्द्रव्यमनल्पबुद्धिः ॥ २८ ॥
शाकं हिनस्ति वपुरस्थि निहन्ति नेत्रम्
वर्णं विनाशयति शुक्रमथासृजञ्च ।
ओजःक्षयं प्रकुरुते पलितञ्चकाले
हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः॥२९

क्षयः । इहेति शास्त्रे । अप्रमेयादिति भावपरो निर्देशः । तेनानन्त्यादित्यर्थः । अयञ्चावचने हेतुः । अत्रैवार्थे चरकोऽप्याह ।

अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिकः ।
द्रव्याणि न हि निर्देष्टुं शक्यं कार्त्स्न्येन नामभि ः॥

इति । अप्रमोहादिति च क्वचित् पाठः । अन्ये तु अनुक्तमपि प्रमादादिति पठन्ति । तन्न प्रमादोऽनवधानं मिथ्याज्ञानमिति यावत् । तत्तु मुनीनां नास्त्येवेति । आस्वादत इति रसतः । रसानां मधुरादीनां ये गुणाः शीतोष्णत्वादयः । यानि वा कर्माणि वातादिहरणह्लादनादीनि तैस्तैर्गुणकर्मभिस्तत्तदनुक्तद्रव्यमादिशेत् ब्रूयादित्यर्थः । भूतगुणैश्चेति चकारात् पार्थिवादिद्रव्यारम्भकाणां भूतानां ये गुणाः स्थूलसान्द्रत्वादयस्तैर्द्रव्यस्य पार्थिवादिकमवधार्य पार्थिवादिद्रव्यप्रतिबद्धैर्गुणकर्मभिरेव तत्तदनुक्तं द्रव्यमादिशेदित्यर्थः । तत्तद्भूतगुणग्रहणञ्च किञ्चित् प्रत्यक्षतः किञ्चिदुपयुक्तवचनतः । किञ्चिदुपयोगतश्चेति ज्ञेयम् ॥ २८ ॥

इति शाकवर्गः ।

---

शाकेषु सर्वे निवसन्ति रोगा
रोगो हि देहस्य विनाशहेतुः।
तस्माद्बुधैः शाकविवर्जनं हि
कार्य्यं तथाम्लेषु स एव दोषः ॥ ३० ॥

इति शाकवर्गः।

---

सैन्धवं दीपनं हृद्यं चक्षुष्यं रोचनं लघु।
स्निग्धं वृष्यञ्च मधुरं शीतं दोषघ्नमुत्तमम् ॥ १ ॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च।
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥२॥
विडं सक्षारतीक्ष्णोष्णं सूक्ष्मं दीपनरोचनम्।
शूलहृद्रोगशमनं रुच्यं वातानुलोमनम् ॥ ३ ॥
सौवर्च्चलन्तु वीर्य्योष्णं विषदं कटुकं लघु।
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि दीपनम् ॥ ४ ॥

सैन्धवादीनां व्यञ्जनसंस्कारकत्वात् शाकानन्तरं लवणादिवर्गमाह। अत्रापि लवणेषु सैन्धवस्य श्रेष्ठत्वात् प्रथमं तद्गुणमाह सैन्धवमिति। अत्र मधुरमित्यनन्तरं चकारो योज्यः। तेनेषन्मधुरत्वं बोध्यते चशब्दसमुच्चितत्वात्। दोषघ्नमिति त्रिदोषहरम्। उत्तममिति लवणेषु श्रेष्ठम्। उक्तञ्च।

त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तममिति ॥ १ ॥
दक्षिणसमुद्रे भवतीति सामुद्रं करकचलवणम् । २ ॥
विडं कृत्रिमं स्वनामख्यातम् । ३ ॥

सौवर्च्चलगुणाः कृष्णलवणे गन्धवर्जिताः ॥ ५ ॥
सतिक्तं कटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ॥६॥
रौमकं तीक्ष्णमुष्णञ्च व्यवायि कटुपाकि च।
वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥७
दीपनं पाचनं भेदि लवणं गुड़िकाह्वयम्।
कफवातक्रिमिघ्नञ्च लेखनं पित्तकोपनम् ॥ ८ ॥
क्षारास्तु दीपनाः सर्वे रक्तपित्तकराः सराः।
गुल्मार्शोग्रहणीदोषशर्कराश्मविनाशनाः ॥ ९ ॥
ज्ञेयौ वह्निसमौ क्षारौ सर्जिकायवशूकजौ।
शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥ १० ॥

सौवर्च्चलं प्रसिद्धम् ॥ ४ ॥

भुवमुद्भिद्योत्पन्नस्य क्षारोदकस्य सूर्य्यरश्मिभिर्वह्नितापाद्वा क्वथनाद्यल्लवणमुत्पद्यते तदौद्भिदमिति निबन्धसंग्रहः। चक्रस्तु ऊषरदेशोद्भवमुत्कारिकालवणमौद्भिदलवणमित्याह। अन्ये तु पाक्यलवणमौद्भिदमित्याहुः ॥ ६ ॥

रुमा नाम नदी तद्भवं रौमकम्। साम्भविदेशोत्थं लवणं गड़लवणमिति ख्यातमित्यन्ये। विष्यन्दीति कफस्रावकारकमिति डल्लनः। सूक्ष्मस्रोतोऽनुसारित्वात् सूक्ष्मम् ॥ ७ ॥

पाक्यलवणविशेषगुड़िकालवणगुणमाह दीपनमिति। पाकादतिकठिनीभावेन गुडिकाकारं लवणं गुड़िकालवणम् ॥ ८ ॥

क्षाराणामपि लवणरसत्वात् क्षारगुणानप्यत्रैवाह क्षारा इति ॥ ९ ॥

क्षारविशेषगुणमाह ज्ञेयाविति ॥ १० ॥

अग्निदीप्तिकरस्तीक्ष्णष्टङ्गणक्षार उच्यते ॥ ११ ॥
आर्द्रकं रोचनं हृद्यं कटूष्णं वृष्यमेव च ।
कफानिलहरं स्वर्यं विबन्धानाहशूलनुत् ॥१२॥
शुण्ठी तु कफवातघ्नी सस्नेहा लघुदीपनी ।
वृष्योष्णा रोचनी हृद्या विपाके मधुरा कटुः ॥१३॥
पिप्पल्यार्द्रा स्वादुशीता गुर्वी श्लेष्मप्रकोपणी ॥१४॥
सा शुष्का मधुरा पाके वृष्या पित्तप्रसादनी ।
स्निग्धोष्णा दीपनी वातश्लेष्मनुच्छ्वासनाशिनी॥१५॥
मरिचं लघु तीक्ष्णोष्णं रूक्षरोचनदीपनम् ।
रसे पाके च कटुकं कफघ्नं पित्तकोपनम् ॥१६॥
स्वादु पाक्यार्द्रमरिचं गुरु श्लेष्मप्रकोपि च ॥१७॥

आर्द्रकादीनामपि व्यञ्जनसंस्कारकत्वादत्रैव तद्गुणमाह आर्द्रकमिति ॥ ११ ॥

श्लेष्मप्रकोपणीति स्ववर्गापेक्षया । न श्लेष्मशमनीत्यर्थ इति डह्लनः ॥ १४ ॥

मधुरपाकितया पित्तं प्रसादयतीति चक्रः । अन्ये तु पित्ताविरोधिनीति पठन्ति । ईषत्पित्तविरोधिनीति च व्याचक्षते । केचित्तु पित्तकोपनीति पठन्ति व्याख्यानयन्ति च ।

सा पित्तशमनी पूर्वं दर्शिता वीर्य्यवादिना ।
शास्त्रकारेण निर्दिष्टा सा तु पित्तप्रकोपणी ॥
तत्रार्द्रा पित्तशमनी शुष्का पित्तप्रकोपणी इति ॥ १५ ॥
मरिचमिति शुष्कमरिचमित्यर्थः ॥ १६ ॥
श्लेष्मप्रकोपीति । श्लेष्मणोऽन्यतश्च तस्य प्रकोपणम् कटु-

नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम्।
गुणवन्मरिचेभ्यश्च चक्षुष्यञ्च विशेषतः॥ १८॥
हिङ्गु तीक्ष्णं कटु रसं शूलाजीर्णविबन्धनुत्।
लघूष्णं पाचनं स्निग्धं दीपनं कफवातजित्॥१९
जीरकं रुचिकृत्सर्वं गन्धाढ्यं कफवातजित्।
तीक्ष्णोष्णं कटुकं पाके कटु पित्ताग्निवर्द्धनम्॥२०
यमानी कृष्णजीरश्च ज्ञेया जीरकवद्गुणैः॥ २१॥
धन्याकं कासतृट्छर्दिशमनं चक्षुषोर्हितम्।
कषायतिक्तं मधुरं हृद्यं रोचनदीपनम्॥ २२॥
लसुनः क्षारमधुरः पत्रे मधुरपिच्छलः।
मध्ये कन्दे तु तीक्ष्णोष्णः कटुपाकरसः सरः॥
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो दीपनपाचनः।
भग्नसन्धानकृद्बल्यो रक्तपित्तप्रकोपणः॥
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान्।
सहिक्कापीनसश्वासकासान् हन्ति रसायनः॥२३॥

तीक्ष्णोष्णत्वात् करोतीति चक्रः। ये तु चयमपि श्लेष्मणो वदन्ति तदनुभवविरुद्धम्। डल्लनस्तु श्लेष्मप्रसेकि चेति पठति॥१७॥

सितं मरिचं शोभाञ्जनवीजम्। अन्ये तु मरिचमेव शुक्लं वदन्ति॥ १८॥

सर्वमिति। शुक्लपीतभेदाज्जीरकद्वयमिति चक्रः॥ २०॥

कृष्णजीरः कारवी॥ २१॥

पलाण्डुर्मधुरो वृष्यः कटुः स्निग्धोऽनिलापहः।
बल्यः पित्ताविरोधी च कफकृद्रोचनो गुरुः॥२४॥
ग्राही गृञ्जनकस्तीच्णो ग्रहण्यर्शोविकारनुत्॥२५॥

इति लवणादिवर्गः।



कषायानुरसं नातिपित्तलं दाड़िमं स्मृतम्।
दीपनीयं रुचिकरं हृद्यं वर्चोविवन्धनम्॥ १ ॥

अनिलापहो वातप्रशमकः। कफकृदिति नात्यर्थं कफकरः। पित्ताविरोधीति किञ्चित्पित्तकर इत्यर्थः। यदाह।
नात्युष्णवीर्य्योऽनिलहा कटुश्च तीच्णो गुरुर्नातिकफावहश्च।
बलावहः पित्तकरोऽथ किञ्चित् पलाण्डुरग्निं परिवर्द्धयेच्च॥
पलाण्डु पेयाज इति ख्यातं॥ २४ ॥
गृञ्जनक गाजर इति नाम्ना मगधादौ ख्यातः॥ २५ ॥

इति लवणादिवर्गः।



यद्यपि शाकेषु फलपाठाच्छाकानन्तरमेव फलगुणाभिधानं युक्तं तथापि शाकसंस्कारत्वेनान्तरङ्गत्वात् अल्पवक्तव्यत्वाच्च सूचिकटाहन्यायेन प्रथमं लवणादिवर्गमभिधाय अनन्तरं फलगुणानाह कषायानुरसमिति। नातिपित्तलमिति। योग्यतया अम्लदाड़िममेवैवंगुणं बोध्यम् ईषत्पित्तकरमित्यर्थः। चरकेऽपि सर्वं पित्तलमम्लमन्यत्र दाड़िमामलकादिति इत्यत्र भट्टारहरिचन्द्रेण दाड़िमग्रहणं निरस्य अन्यत्रामलकादित्येव पाठः

द्विविधं तत्तु विज्ञेयं मधुरञ्चाम्लमेव च ।
त्रिदोषघ्नन्तु मधुरमम्लं वातकफापहम् ॥ २ ॥
प्राचीनामलकञ्चैव दोषघ्नं गरहारि च ॥ ३ ॥
कर्कन्धुकोलवदरमामं पित्तकफावहम् ।
पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥ ४ ॥
तच्छुष्कं कफवातघ्नं न च पित्ते विरुध्यते ।
पुराणं तृट्प्रशमनं श्रमघ्नं लघु दीपनम् ॥ ५ ॥
सौवीरं वदरं स्निग्धं मधुरं वातपित्तजित् ॥६॥

पुरस्तात इति। चन्द्रिकाकारेणाप्यनुमतमेतत्। चक्रेणापि नातिपित्तलमित्येव पाठोऽनुमन्यते। किन्तु अस्मिन् पक्षे।

अम्लं पित्तकरं प्रायो दाड़िमामलकादृते।

इति वाग्भटविरोधो दुष्परिहर इत्यवधेयम्। अन्ये तु नापि पित्तलमिति पठित्वा अम्लं दाड़िमं पित्तं न करोति न च शमयतीति च व्याचक्षते। चरकेऽपि दाड़िमगुणे कफ-पित्तविरोधीत्युक्तम्। तत्राम्लं दाड़िमं पित्ताविरोधि मधुरन्तु कफाविरोधीत्याहुः ॥ १ ॥

प्राचीनामलकं प्रसिद्धम् ॥ ३ ॥

कर्कन्धुरल्पा शृगालकोलिः। कोलं मध्यप्रमाणवदरम्। वदरं महद्वदरम्। अम्लमिति पाठेऽप्याममेव आमावस्थायामेव तेषामम्लत्वात् पित्तकफावहमिति पित्तकफजनकम् ॥ ४ ॥

पुराणमिति पक्ववदरचूर्णम्। तदीयशुण्ठकमिति चक्रः ॥५॥

सौवीराख्यं वदरं महत्तमं आमपक्वावस्थासु मधुरमिति चन्द्रिकाकारः ॥ ६ ॥

आम्रं बालं रक्तपित्तकरं मध्यन्तु पित्तलम्।
पक्वं वर्णकरं रुच्यं मांसशुक्रबलप्रदम्॥
पित्ताविरोधि वातघ्नं हृद्यं गुर्वनुलोमनम्॥ ७॥
आम्रपेशी कषायाम्ला भेदनी कफवातजित्॥८॥
आम्रातकं तर्पणञ्च बल्यं मधुरबृंहणम्।
स्नेहनं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्य्यति॥९॥
लकुचं गुरु विष्टम्भि त्रिदोषं शुक्रदूषणम्॥१०॥
करमर्द्दं तृषाहारि रुच्यम्लपित्तकारकम्॥ ११॥
वातपित्तहरं वृष्यं पियालं गुरु शीतलम्॥१२॥

आम्रस्यावस्थाभेदेन गुणभेदमाह आम्रमिति।

भट्टारहरिश्चन्द्रेणापि चरके रक्तपित्तकरं बालमिति पाठं निरस्य वातपित्तकरं बालमित्येव पाठः पुरस्कृतः। चक्रेणाप्यनुमतमेतत्। युक्तञ्चैतत्। सुश्रुतेऽपि पित्तमारुतकृद्बालमित्युक्तत्वात्। किन्तु वाग्भटे वातपित्तास्रकृद्बालमिति दर्शनात् रक्तपित्तकरत्वञ्चास्य न विरुध्यत इति ज्ञेयम्॥ ७॥

आम्रपेशी शुष्काम्रम्॥ ८॥

आम्रातकमाम्रफलसदृशमिति चन्द्रिका। आमडा इति ख्यात इति चक्रः। तद्द्विविधं मधुरमम्लञ्च। तत्र मधुरस्यैवायं गुणश्चरकेणोक्तः। अम्लाम्रातकगुणस्य पश्चादुक्तत्वात्॥९॥

लकुचो डहुः॥ १०॥

करमर्द्दं कण्टकीफलमिति चन्द्रिका। तद्द्विविधं महदल्पञ्च। तत्र महत् प्रायशो ग्रामभवमम्लञ्च। अल्पा तु करमर्द्दी वनजा मधुराम्लफला इति च व्याचष्टे॥ ११॥

भव्यं स्वादु कषायाम्लं हृद्यमास्यविशोधनम् ।
पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥१३॥
अम्लवेतसमत्यम्लं तीक्ष्णं स्निग्धञ्च दीपनम् ॥१४॥
वातापहं तिन्तिड़ीकमामं पित्तबलाशकृत् ।
ग्राह्युष्णं दीपनं रुच्यं सम्पक्वं कफवातनुत् ॥१५॥
अम्लिकायाः फलं पक्वं तस्माच्चाल्पतरं गुणैः ॥१६
कषायविषदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
अवदंशक्षमं रूक्षं वातलं लवलीफलम् ॥ १७ ॥
जम्बीरं वातकफनुद् गुरु पित्तप्रकोपणम् ।
तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ॥१८॥
नागरङ्गं दुर्जरञ्च गुरु वातविनाशनम् ॥ १९ ॥

पियालो मगधे स्वनामख्यातः ॥ १२ ॥

भव्यं तालफलोपमं केवलवल्कलसंहतिमात्रमिति चन्द्रिका भानुमती च । अन्ये तु कर्मरङ्गफलं भव्यमाहुः ॥१३॥

अम्लवेतसं थैकलमिति उत्तरदेशे ख्यातम् ॥ १४ ॥

तिन्तिड़ीकं महार्द्रकम् न तु तिन्तिड़ीफलम् चरके सुश्रुते च पृथगेवाम्लिकायाः फलमित्यादिना तद्गुणपाठात् । पुरुषोत्तमस्तु तिन्तिड़ीफलमम्लिकायाः फलमिति भ्रान्त्या महार्द्रकगुणं पृथगेव पठति । तत्पुनरविरोधाज्जृम्भितम् ॥ १५ ॥

अम्लिकायाः फलं तिन्तिड़ीफलम् ॥ १६ ॥

अवदंशक्षममिति लवलीफलं प्राश्य द्रव्यान्तरे रुचिर्भवति इत्यर्थः ॥ १७ ॥

फलं वेत्रस्य वातघ्नमम्लपित्तविनाशकृत् ॥ २० ॥
मातुलुङ्गफलं हृद्यमम्लं लघ्वग्निदीपनम् ।
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम्॥२१॥
वीजपूरस्य तिक्ता त्वक् दुर्जरा कफवातहृत् ॥२२॥
तन्मांसं स्वादु शीतञ्च गुरु मारुतपित्तजित्॥२३॥
केशरन्तु लघु ग्राहि गुल्मार्शोघ्नं हि दीपनम् ।
मेध्यं शूलानिलच्छर्दिकफारोचकनाशनम् ॥२४॥
एवम्प्रकारा विज्ञेया वृष्या च मधुकुक्कुटी ॥२५॥
कपित्थमांसं कण्ठघ्नं विषघ्नं ग्राहि वातलम् ।
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ।
तदेव सिद्धं दोषघ्नं विषघ्नं ग्राहि गुर्वपि ॥ २६ ॥
जाम्बवं वातलं ग्राहि रूक्षं पित्तकफापहम् ॥२७॥

मातुलुङ्गफलस्य प्रत्यवयवगुणं निर्दिशन्नाह वीजपूरस्येति । वीजपूरस्येति मातुलुङ्गस्य कफवातहृदिति कफवातनाशिनी तिक्ता त्वग्दुर्जरा तस्य वातक्रिमिकफापहेत्युक्तेः ॥ २२ ॥

मांसमिति त्वक्केशरमध्यभागः ॥ २३ ॥

मेध्यं मेधाहितं प्रभावात् ॥ २४ ॥

मधुकुक्कुटी मखुर इति ख्याता । मातुलुङ्गापेक्षया महाप्रमाणा वहुमांसाल्पकेशरा ॥ २५ ॥

तदेवेति । कपित्थं सिद्धमिति कालवशात् पक्कम् ॥ २६ ॥

जम्बूस्त्रिविधा राजजम्बूर्महाफला । काकजम्बूर्वनजम्बू-

तिन्दुकं तुवरं स्वादु गुरु पित्तकफापहम् ॥२८॥
स्निग्धं स्वादु कषायञ्च राजादनफलं गुरु ॥२९॥
कषायमधुरं रूक्षं तोदनं कफवातजित् ।

रिति ख्याता । भूमिजम्बुरल्पफला । अत्र पुनरविशेषात् जाम्ब-वशब्देन सर्वजम्बूफलमुच्यते ॥ २७ ॥

तिन्दुकं गाव इति ख्यातं केन्दुरिति केचित् । तुवरं कषायरसं कषायरसत्वञ्चास्य आमावस्थायां स्वादुरसश्चास्य पक्वा-वस्थायामेव विज्ञेयम् । पित्तकफापहत्वञ्चास्यामपक्वसाधारणो गुणः । उक्तञ्च ।

आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ।
विपाके गुरु सम्पक्वं मधुरं कफपित्तजित् ॥

अत्रामस्य वातकोपित्वेन पित्तकफहन्तृत्वमर्थलभ्यमेव ॥२८॥

राजादनफलम् खर्ज्जूरसदृशं क्षीरिकायाः फलमिति चन्द्रिका ॥ २९ ॥

तोदनं वामप्रियं फलम् वारणाम्लिकेति दाक्षिणात्येषु ख्यातम् । ननु पित्ताग्निवर्द्धनमित्युभयोपादानं न युज्यते । सुश्रुते न खलु पित्तव्यतिरेकेणान्योऽग्निरुपलभ्यते इत्यादिना पित्ताग्न्योरभेदस्योक्तत्वात् । अनुमानञ्च पित्ताग्न्योरभेदसाध-कम् यथा अग्नित्वेन व्यवह्रियमाणं तेजः पित्तावयवरूपम् । पित्तवर्द्धनपित्तक्षपणकैर्द्रव्यैर्ह्रासयोगित्वात् प्रदेशान्तरस्थपित्ता-वयववदिति । आगमा अपि अग्निपित्तयोरभेदसाधका यथा ।

कानकं राजतं ताम्रं कृष्णायस्त्रपु सीसकम् ।
चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात् ॥

इति । तथा षष्ठी कला पित्तधरा इत्यादिना अग्न्याधा-रतया ग्रहण्युक्ता । तथा भोजेऽपि ।

अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्द्धनम्॥३०
अनुपाकिफलं स्वादु वातपित्तविनाशनम् ॥३१॥
क्षीरिवृक्षफलं विद्याद्गुरु विष्टम्भि शीतलम् ।
कषायमधुरं साम्लं नातिमारुतकोपनम् ॥ ३२ ॥

तस्मात् तेजोमयं पित्तं पित्तोष्मा यः स पक्तिमान् ।

इति अत्रोच्यते वह्निपित्तयोः पारमार्थिके हि अभेदे तीक्ष्णः पित्तेनाग्निरिति कार्य्यकारणभावो न स्यात् तथा कट्वजीर्ण-विदाह्यम्लक्षाराद्यैः पित्तमुल्वणम्। आप्लावयद्धन्त्यनलमिति चरकवचनञ्च विरुध्यते। तथा पित्तशमकमपि घृतमग्निमेधे करोतीत्युक्तमसङ्गतं स्यात्। तथा समदोषः समाग्निश्चेति वचनेऽपि पौनरुक्त्यं दुष्परिहरं स्यात्। अभेदसाधकानुमाने चासिद्धो हेतुः। घृतस्य पित्तशमकस्यापि अग्निवर्द्धकत्वात्। तथा कट्वजीर्णविदाह्यम्लस्य च पित्तजननावान्तरव्यापारस्या-ग्न्युपघातकत्वात्। यदप्यभेदसाधकं पित्ततेजःप्रतापनादिति वचनं तथा पित्तोष्मा यः स पक्तिमानिति च तदपि पित्ता-ग्निवस्य तदवयवस्य तेजसोऽग्नित्वं वदति। तस्मात् अवयवावय-विरूपेणाग्निपित्तयोर्भेदो विद्यत एव। सुश्रुतेन तु अवयवा-वयविनोरभेद एव विवक्षित इति न विरोधः। अभेदा-श्रयणञ्च पित्तवर्द्धनैः प्रायो वर्द्धनमग्नेस्तच्छमकैश्च प्रायः शम-नमग्नेरिति प्रतिपादनार्थम्। पित्ततेजोरूपतायाञ्च वह्ने-स्तेजोविपरीतपित्तद्रवांशवर्द्धकाजीर्णविदाह्यम्लादिभिर्व्यक्तीभूत-द्रवपित्तजननादग्नेर्निर्वापणं युक्तमेवेति ॥ ३० ॥

अनुपाकीति। अनुया इति ख्यातम् ॥ ३१ ॥

क्षीरिवृक्षा न्यग्रोधोडुम्बराश्वत्थप्लक्षादयः ॥ ३२ ॥

वाकुलं मधुरं स्निग्धं कषायं विषदञ्च तत् ।
स्थिरीकरञ्च दन्तानां संग्राहि फलमिष्यते ॥३३॥
परूषकं समधुरं कषायानुरसं लघु ।
वातघ्नं पित्तजननमत्यम्लं तदुदाहृतम् ॥ ३४ ॥
पक्वं समधुरं तत्तु वातपित्तनिवर्हणम् ॥ ३५ ॥
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ।
कटुतिक्तकषायोष्णं बालबिल्वमुदाहृतम् ॥
तदेव विद्यात्सम्पक्वं मधुरानुरसं गुरु ।
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम् ॥३६॥

आमपक्वभेदेन परूषकस्य गुणमाह परूषकमिति ।

अयञ्चामपरूषकगुणः । पक्वस्य वक्ष्यमाणत्वात् । परूषकं स्वनामख्यातम् ॥ ३४ ॥

तदिति परूषकम् ॥ ३५ ॥

बिल्वस्याप्यामपक्वभेदेन गुणमाह कफानिलहरमिति ।

बालबिल्वं बिल्वशलाटु । अत्र कफानिलहरमित्यारभ्य उदाहृतमित्यन्तश्च प्रथमावस्थबिल्वगुणः । तदेवेत्याद्यर्द्धश्लोकेन मध्यावस्थबिल्वगुणः । विदाहीत्यादिः पूतिमारुतमित्यन्तः स्वादुपक्वबिल्वगुण इति । सम्पक्वमिति परिणतं मध्यावस्थमित्यर्थः । युक्तञ्चैतत् सुपक्वस्य हि मधुरानुरसता न युज्यते यतः पक्वस्य मधुर एव रसो नत्वन्यो रस इति । पूतिमारुतमिति पूतिशब्दोऽयं सुगन्धिवचनः । यथा पूतिः खट्वासः । यथा वनजा मधुकुक्कुटी पूतिपुष्पा सुगन्धिपुष्पेत्यर्थः । तेन पूतिः सुगन्धिर्मारुतो यस्य तत्तथा एतच्च विशेषणं सुपक्वास्याप्रदर्शनपरम् ।

द्राक्षा तु मधुरा स्निग्धा शीता वृष्यानुलोमनी।
रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ॥ ३७ ॥
गोस्तनी या गुरुर्वृष्या द्राक्षा सा वातपित्तनुत्॥३८
केश्यं रसायनं मेध्यं काश्मर्य्याः फलमुच्यते ॥३९॥
खर्जूरं मधुरं वृष्यं स्निग्धं शोणितपित्तजित्।
क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ॥ ४० ॥
मधूकस्य फलं पक्वं वातपित्तप्रणाशनम्।
तस्य पुष्पं वृंहणीयमहृद्यं गुरु शीतलम् ॥४१॥
नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम्।

यतः सुपक्वविल्वसंसर्गी वाह्यपवनः सुगन्धिर्भवतीति। तदेव दोषत्रयकरं प्रभावात्। अन्ये तु पूतिमारुतं दुर्गन्धिकुक्षिवातकरमित्याचक्षते। तत्र सम्यगप्रतीतेः मध्यविल्वगुणानिर्देशाच्चेति। नहि य एव बालविल्वस्य गुणः स एव मध्यस्यापि युज्यते इति चन्द्रिका। चक्रस्तु तदेव विद्यादित्यादिः पूतिमारुतमित्यन्तः पक्वविल्वगुण इत्याह। यतश्चरकेऽपि दुर्जरं विल्वसिद्धन्तु इत्यादिना द्विविधमेव वाग्भटेऽप्येवम् ॥ ३६ ॥

अनुलोमनी सरा मलभेदिनीति यावत् ॥ ३७ ॥

गोस्तनी वृहत्प्रमाणद्राक्षा ॥ ३८ ॥

काश्मरी गाम्भारी ॥ ३९ ॥

खर्जूरं द्विविधं महाप्रमाणं स्वल्पप्रमाणञ्च। तत्राद्यं पिण्डखर्जूरं पारसीयदेशोद्भवम्। स्वल्पप्रमाणञ्च विट्खर्जूरम् ॥४०॥

मधूकस्य पुष्पाणां फलवदुपयोगात् तत्समानगुणत्वाच्चात्राभिधानं बोध्यम्। अहृद्यमिति मदजनकत्वात् ॥ ४१ ॥

बलमांसकरं हृद्यं बृंहणं वस्तिशोधनम् ॥ ४२ ॥
तालं स्वादुरसं पक्वं गुरु पित्तविनाशनम् ।
तद्वीजं स्वादुपाकन्तु मूत्रलं वातपित्तजित् ॥४३॥
कदलं मधुरं हृद्यं कषायं नातिशीतलम् ।
वातपित्तहरं रुच्यं वृष्यं श्लेष्मकरं गुरु ॥ ४४ ॥
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ॥४५॥
पनसं सकषायन्तु स्निग्धं स्वादुरसं गुरु ।
पथ्या पञ्चरसायुष्या चक्षुष्या लवणा सरा ।
मेध्योष्णा दीपनी दोषशोथकुष्ठज्वरापहा ॥ ४६ ॥
धात्री तद्वद्विशेषेण वृष्या शीतैव वीर्य्यतः ।
हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः ।
कफं कटुकषायत्वात् फलेभ्योऽप्यधिकञ्च तत्॥४७
अक्षं भेदनरूक्षोष्णं वैस्वर्य्यं क्रिमिनुत् कटु ।

तद्बीजमिति तालवीजम् ॥ ४३ ॥

कदलं कदलीफलं तच्च नानाविधं ज्ञेयम् ॥ ४४ ॥

श्लेष्मातको बहुवारः ॥ ४५ ॥

अलवणा सती पञ्चरसा इत्यर्थः ॥ ४६ ॥

अत्र दोषोपशमने यत् कारणं वर्णितं तद्यद्यपि पित्तादिसमानतया पित्तादिवर्द्धनमपि युज्यते तथाप्यामलक्याः शिवत्वप्रभावात् दोषशमनमेव परं करोति न प्रकोपमिति ज्ञेयम् । एतदेवाह फलेभ्योऽप्यधिकञ्च तत् । अधिकमिति श्रेष्ठं शिवत्वप्रभावयोगादिति भावः ॥ ४७ ॥

चक्षुष्यं स्वादुपाकञ्च कषायं कफपित्तनुत् ॥४८॥
पथ्या मज्जा तु चक्षुष्यो वातपित्तहरो गुरुः ॥४९॥
वैभीतको मदकरः कफमारुतनाशनः ॥ ५० ॥
कोलमज्जा तु मधुरः कषायः पित्तनाशनः ।
तृष्णाच्छर्द्यनिलघ्नश्च धात्रीमज्जापि तद्गुणः ॥५१॥
पियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥५२॥
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् ।
तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत् ॥५३॥
भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलम्॥५४
करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ।
रूक्षोष्णं कटुकं पाके लघु वातकफापहम् ॥५५॥
तिक्तमीषद्विषहितं विड़ङ्गं क्रिमिनाशनम् ॥५६॥
फलेषु परिपक्वं यद् गुणवत् तदुदाहृतम् ।

प्रसङ्गान्मज्जगुणमाह पथ्येति ॥ ४९ ॥

वैभीतको विभीतकमज्जा ॥ ५० ॥

अनुक्तमज्जगुणातिदेशार्थमाह यस्येति । वीर्य्यं रसादि येन कुर्वन्ति तद्वीर्य्यमित्युक्तेः ॥ ५३ ॥

अग्निसममिति स्फोटादिजनकत्वात् ॥ ५४ ॥

करञ्जो वृक्षकरञ्जः किंशुकः पलाशः अरिष्टो निम्बः जन्तुः क्रिमिः ॥ ५५ ॥

ईषत्तिक्तमित्यन्वयः ॥ ५६ ॥

इदानीं यादृशावस्थं फलमुपादेयं तदाह फलेष्विति ।

विल्वादन्यत्र तज्ज्ञेयमामं तद्धि गुणोत्तरम् ॥५७॥
व्याधितं क्रिमिजुष्टञ्च पाकातीतमकालजम्।
वर्जनीयं फलं सर्वमपर्य्यागतमेव च ॥ ५८ ॥

इति फलवर्गः।

---

धारं कारन्तु तौषारं हैमं खाम्बु चतुर्विधम् ॥१॥
धारन्त्वत्र द्विधा प्रोक्तं गाङ्गं सामुद्रमेव च ॥ २ ॥

विल्वादन्यत्रेति विल्वमेव परमपक्वं श्रेष्ठम्। गुणोत्तरमिति गुणतः श्रेष्ठम् ॥ ५७ ॥

याद्दशं फलमनुपादेयं तदाह व्याधितमिति॥ पाकातीतमिति अतीतपाककालम् अतिपाके क्लिन्नमित्यर्थः। अकालजमनुचितकालसम्भूतम्। अपर्य्यागतमपरिणतम् ॥ ५८ ॥

इति फलवर्गः।

---

पूर्व्वमन्नमुक्तं तदुपकरणानि च मांसशाकफलान्युक्तानि इदानीं पानं वक्तव्यम्। पानेषु पानीयस्य प्राधान्यात् प्रथमं तद्गुणा वाच्याः। तत्रान्तरीक्षजलस्य सर्वजलश्रेष्ठत्वात् तद्भेदमाह धारमिति। धाराभवं धारमैन्द्रमित्यर्थः। करकापर्य्यायः करशब्दः तद्भवं कारम्। तौषारं शिशिरभवम्। हैमं संहतिभूतहिमभवम्। चरके तु हिमतुषारयोरभेदात् त्रिविधमेवोक्तम् ॥ १ ॥

तत्र धारभेदमाह धारमिति। ननु चरके धाराख्यमान्तरीक्षजलमेकविधमेवोक्तं यथा

जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात्।

येनाभिहृष्टममलं शाल्यन्नं राजतस्थितम्।
अक्लिन्नमविवर्णं वा तत् पेयं गाङ्गमन्यथा।

तत् पतत् पतितश्चैव देशकालावपेक्षते॥

इति। सत्यं तत्राप्यान्तरीक्षजलस्य धूलीमलविषलूतादिसम्बन्धात् सदोषत्वे तदसम्बन्धाच्च निर्दोषत्वमिति द्वैविध्यमुक्तयुक्तेरेव। अतोऽत्रापि सामुद्रगाङ्गशब्दयोः सदोषनिर्दोषत्वमात्रमर्थः। न पुनः समुद्रादुद्धृतं सामुद्रम् गङ्गाया उद्धृतं मेघैर्गाङ्गमित्यर्थः। तथा सति गङ्गावदपरनदीप्रभृतिभेदादपि भेदकल्पनापत्तेः। अत्र गङ्गाशब्दो नदीप्रभृतीनां समुद्रव्यतिरिक्तजलाशयानामुपलक्षक इत्युच्यते। तथापि चरकेण समं विरोधो दुष्परिहर एव। किञ्च यदि समुद्रादुद्धृतं सामुद्रमित्येवार्थः तदा तस्य त्रिदोषकारित्वात् सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विनेत्यनेनाश्वयुजेऽपि ग्रहणं वक्ष्यमाणं नोपपद्यते। न च कालविशेषो जलान्तरवत् समुद्रजलमपि निर्दोषीकर्त्तुं प्रभवति तस्मात् प्रथमैव व्याख्या युक्ता। यत् पुनः सामुद्रमप्याश्वयुजे गाङ्गवद्भवतीति सुश्रुतवचनम् तदाश्वयुजे आन्तरीक्षस्य निर्दोषतापरम् तदा हि सतोऽपि लूतादिदोषसम्बन्धस्य अगस्त्येन हननात्। कालमहिम्ना च बाधितत्वात्। तदुक्तं जतूकर्णे

वर्षासु चरन्ति घनैः सहोरगा वियति कीटलूताश्च।
तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्वमिति॥ २॥

गाङ्गसामुद्रयोर्भेदेन ज्ञानोपायमाह येनेति। येनाम्बुना अभिहृष्टमाभिमुख्यतः सिक्तं शाल्यन्नं रजतपात्रस्थितमक्लिन्नमविवर्णञ्च भवति तद्गाङ्गं जलमिति ज्ञात्वा पेयम् उपयोज्यमित्यर्थः। तेन स्नानावगाहयोरपि ग्रहणम्। अन्यथा एतल्ल-

सामुद्रं तन्न पातव्यं मासादाश्वयुजाद् विना ॥३॥
खाम्बु गङ्गाभवं हृद्यं ह्लादि बुद्धिप्रबोधनम्।
तन्वव्यक्तरसं स्पष्टं शीतं लघ्वमृतोपमम्॥
जीवनं तर्पणञ्चैव तद्वन्नाभसभूमिगम् ॥ ४ ॥
क्षारकं तोयममृतं नैहारं सर्वदोषकृत्।
अवश्यायभवं रूक्षं वातलं लघु शीतलम्॥
दाहास्रक्पित्ततृट्छर्द्दिसक्थिस्तम्भादिपूजितम्॥५

लक्षणविपर्य्ययेण सामुद्रमिति ज्ञात्वा तन्न पातव्यम्। अथ किं सदैव तन्न पातव्यमित्यत आह मासादाश्वयुजाद्विनेति। एतच्च आन्तरीक्षजलग्रहणादिकालप्रदर्शनपरम्। तेन कार्त्तिकेऽपि शरद्रूपे हेमन्ते चान्तरीक्षजलग्रहणमविरुद्धं भवति। यदाह हारीतः

प्रवृत्तायां शरद्यस्मात् पश्चाद्वाते प्रवाति च।
हेमन्ते चापि गृह्णीयात्तज्जलं मृण्मयैर्घटैरिति ॥ ३ ॥

तत्र प्रशस्तस्य धाराख्यान्तरीक्षजलस्य गुणमाह खाम्बु इति। हृद्यमिति मनःप्रसादकत्वात्। तनु स्वच्छम्। स्पष्टमित्यास्वादसुखम्। जीवनं जीवनहेतुत्वात् ओजोवृद्धिकरमित्यरुणः। सौम्यधातुवर्द्धनमित्यन्ये। तर्पणं क्लमहृत्। भौमजलेऽपि कुत्रचिदान्तरीक्षजलगुणानतिदिशति तद्वन्नाभसभूमिगमिति। नाभसी नभोगुणभूयिष्ठा भूमिः तद्गतं जलमपि तद्वदान्तरीक्षगाङ्गजलवदित्यर्थः। सुश्रुतेऽप्युक्तम् आकाशगुणभूयिष्ठायामव्यक्तरसं तत् पेयमान्तरीक्षालाभ इति ॥ ४ ॥

क्षारतौषारहैमानामपि क्रमेण गुणानाह क्षारकमित्यादि।

नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ॥ ६ ॥
नदेऽभिष्यन्दि मधुरं सान्द्रं गुरु कफापहम् ॥७॥
सारसं तुवरं वल्यं तृष्णाघ्नं मधुरं लघु ॥ ८ ॥
ताड़ागं वातलं स्वादु कषायं कटु पाकि च ॥ ९॥
वाप्यं सक्षारकटुकं पित्तलं कफवातनुत् ॥१०॥
कौपं कफघ्नं सक्षारं पित्तलं लघु दीपनम् ॥११॥
चौण्डमग्निकरं रूक्षं मधुरं कफकारि च ॥१२॥
नैर्झरं लघु पथ्यञ्च दीपनं कफनाशनम् ॥ १३ ॥
औद्भिदं पित्तशमनं मधुरं न विदाहि च ॥१४॥

अवश्यायसंहतीभूतं हिमम् । सक्थिस्तम्भ ऊरुस्तम्भः । तद्ध-न्तृत्वञ्च श्लेष्ममेदोहरत्वात् । तदुक्तं मेदः श्लेष्मसुपूजितमिति ॥५॥

नादेयादिभद्भिन्नानां भौमजलानां गुणमाह नादेयमिति । नादेयं गङ्गादिनदीभवम् । लेखनं कर्षणम् ॥ ६ ॥

नदः शोणभद्रादिः तत्र यज्जलं तत् एवंगुणमित्यर्थः । कफा-वहं कफकरम् ॥ ७ ॥

सरो दिव्यखातं पुरुषव्यापारं विना ॥ ८ ॥

तट उच्चप्रदेशस्तस्मादागो गतिर्यस्य स तड़ागः । स पुन-रुच्चप्रदेशादागच्छज्जलस्य निम्नप्रदेशे बन्धनाद्भवति ॥ ९ ॥

वापी इष्टकादिबद्धसोपाना दीर्घिका ॥ १० ॥

कूपो मृत्पद्देष्टकादिबद्धसोपानः ॥ ११ ॥

चुण्डो नवकूपः प्रत्यासन्नजलः स पुनर्नद्यादिसमीपे तत्कालकृता लघुकूपिका ॥ १२ ॥

नैर्झरम् उच्चप्रदेशात् प्रस्रवज्जलम् ॥ १३ ॥

वैकिरं लघु सक्षारं श्लेष्मलं वह्निदीपनम् ॥१५॥
कैदारं पाल्वलं स्वादु विपाके गुरु दोषलम् ॥१६॥
सामुद्रं लवणं विस्नं सर्वदोषप्रकोपणम् ॥ १७ ॥
आनूपं वार्य्यभिष्यन्दि मधुरं पिच्छिलं गुरु ।
स्निग्धं वह्निहरं सान्द्रं जाङ्गलं वार्य्यतोऽन्यथा ॥१८
साधारणं वारि शीतं दीपनं मधुरं लघु ॥१९ ॥
पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ।
पथ्याः समस्तास्ता नद्यो विपरीतास्ततोऽन्यथा॥२०॥

औद्भिदं निम्नप्रदेशादूर्द्धमुत्तिष्ठज्जलम् ॥ १४ ॥

विकिरं वालुकादीन् विकीर्य्य गृह्यमाणजलस्थानं तद्भवम् ॥ १५ ॥

केदारः प्रसिद्धः । पल्वलं तृणाद्याच्छन्नमन्दसरः ॥ १६ ॥

नद्याद्याधारवशेन जलधर्मानभिधायानूपादिदेशभवत्वेन पुनर्जलगुणमाह आनूपमिति । मधुरमिति व्यक्तरसत्वेन तद्विपरीतन्तु अव्यक्तरसत्वेनेत्यर्थः ॥ १८ ॥

यद्यप्यानूपादावपि नद्यादिस्थितस्यैव जलस्यामी गुणास्तथापि अनन्तरोक्तनादेयादिगुणेन समं न विरोधः । यतोऽन्नद्रव्यप्रकृतिरक्तशाल्यादेस्तथा पेयादेस्तद्विकारस्य च पृथगुक्तगुणयोरिवात्रापि बलाबलनिरूपणं विरोधे सति चिन्तनीयम् । उभयानुगुणतया तु गुणस्योत्कर्ष एव भवतीति प्रतिपादितम् ॥ १९ ॥

इदानीं नदीनां गम्यदेशविशेषात् तथा वेगावेगाभ्यां गुणदोषानाह पश्चिमेति । अतोऽन्यथेति पूर्वसमुद्रगास्तथा मृदुवहास्तथा कलुषोदकाश्चेत्यर्थः । विपरीता इत्यपथ्या इत्यर्थः ॥२०॥

उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः।
हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः॥
क्रिमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते॥२१॥
पारियात्रभवा याश्च विन्ध्यसह्यभवाश्च याः।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च॥२२॥
रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम्।
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम्॥२३॥
दिवार्ककिरणैर्जुष्टं जुष्टमिन्दुकरैर्निशि।

इदानीं नदीनां प्रभवस्थानविशेषेणापि गुणविशेषमाह उपलेति। खेदितं जातक्षोभम्। उपलेत्यादिविशेषणेन हिमवन्मलयाधित्यकाभवानामेव पथ्यत्वमिति बोधयति। तेन सुश्रुते हिमवन्मलयप्रभवाणामपथ्यत्वमुक्तं यत्तदुपत्यकाभवनद्यभिप्रायेणेति चरकेण समं न विरोध इत्याहुः॥ २१॥

अत्र पारियात्रदरीभवनदीजलाभिप्रायेण हृद्रोगादिकारणत्वमुक्तम्। सुश्रुते तु पारियात्रतड़ागोद्भवनदीवलादिकर्त्तृतयोक्तेति न विरोधः। तदुक्तं विश्वामित्रेण।

तड़ागजं दरीजञ्च तड़ागाद्यत् सरिज्जलम्।
वलारोग्यकरं तद्धि दरीजं दोषलं मतमिति॥ २२॥

चन्द्रकान्तमणिप्रभवजलगुणमाह रक्षोघ्नमिति। इदन्तु चन्द्रकिरणानुप्रवेशान्नाभसं मणिप्रभावाच्च भौममित्युभयात्मकमिति डल्लनः॥ २३॥

भौमजलानामप्यर्कसोमसंस्कारजगुणविशेषं दर्शयन्नाह दिवेति। अत्रार्थलभ्यमपि दिवानिशिपदं समस्तदिवारात्रि-

अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥ २४ ॥
नारिकेलोदकं वृष्यं स्वादु स्निग्धं हिमं गुरु।
हृद्यं पित्तपिपासाघ्नं दीपनं वस्तिशोधनम् ॥२५॥
नारीकेलजलं जीर्णं गुरु विष्टम्भि पित्तकृत् ॥२६॥
वालक्रमुकतोयन्तु तृष्णापित्तास्रजिद्गुरु ॥२७॥
तालाम्बु पित्तजिच्छुक्रस्तन्यवृद्धिकरं गुरु ॥ २८ ॥
मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये।
श्रमक्लमपरीतेषु तमके वमथौ तथा ॥

व्याख्यर्थम्। चन्द्रशब्दो हि हिमाधारतया नैशहिमोपलक्षकः। अन्यथा पौर्णमास्यामेव परं सम्पूर्णां निशां व्याप्य चन्द्रांशुयोगः स्यात्। अरूक्षमिति चन्द्रकरसंस्पर्शात्। अनभिष्यन्दीति अर्ककरसंस्पर्शात्। अत्र निषेधमुखेन प्रणयनं स्नेहरौक्ष्ययोरतिशैत्योष्णयोरिव दोषवत्त्वसूचनार्थम्। तत्तुल्यं गगनाम्बुनेति एतेन गगनजलालाभे तत्कार्य्ये तदेवोपयुज्यत इति दर्शयति ॥ २४ ॥

नारिकेलोदकगुणमाह नारिकेलेति। नारिकेलोदकमिति ईषत्पक्वनारिकेलमिति जेज्जड़ः। पित्तपिपासाघ्नमिति पित्तजनितपिपासाघ्नं तेनामजादिपिपासाहरं न भवतीति चक्रः। जेज्जड़स्तु गुर्वित्यत्र लघ्विति पठति। तत्तु मधुरे वृष्ये स्निग्धे च अनुपपन्नम्। प्रभावात्तद्वर्णनं नागमान्तरसाधितमिति चक्रः ॥ २५ ॥

इदानीं शैत्यस्य प्रशस्तत्वेन तद्विषयं सापवादमाह मूर्च्छेति। उष्ण आतपस्तदुपलक्षितो ग्रीष्मः शरच्चेति चन्द्रिका। आत-

ऊर्द्ध्वगे रक्तपित्ते तु शीतमम्भः प्रशस्यते ॥ २९ ॥
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे।
आध्माने स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे॥
हिक्कायां स्नेहपीते च शीताम्बु परिवर्जयेत् ॥३०॥
उष्णोदकं सदा पथ्यं कासश्वासज्वरापहम्।
कफवातामदोषघ्नं दीपनं वस्तिशोधनम्॥ ३१ ॥

पजनितदाह इति चक्रः। तमके श्वासविशेषे मोह इति वा ॥ २९ ॥

कुत्र पुनस्तन्नोपयुज्यत इत्याह पार्श्वशूल इति। स्तिमिते कोष्ठे आमकोष्ठ इति गयदासः। सद्यः शुद्ध इति सद्यः कृतशोधने। सद्यःशब्दोऽयं तस्मिन्नेव शोधनक्रियाव्यासेह निवर्त्तत इत्येके। अन्ये सद्यःशब्दोऽयं सप्तरात्रे वैद्यकव्यवहाराद्बोध्यः। यथा सद्यः प्राणहराणि सप्तरात्राभ्यन्तरे मारयन्तीत्याहुः। एषु शीताम्बुनिषेधादुष्णजलस्य विधिरित्यर्थलब्धमेव सविशेषण इत्यादिन्यायात् ॥ ३० ॥

तस्यैवोष्णोदकस्य गुणमाह उष्णोदकमिति। यद्यप्यौष्ण्यं जलस्य स्पर्शदोष इति सुश्रुते नोक्तं तथापि अवस्थायां व्याधिविशेषहरत्वेनोपादेयमपीति केचित्। वस्तुतस्तु भूवाष्पजनितौष्ण्यमेव सदोषत्वेन तत्रोक्तं इदन्तु अग्न्यातपकृतमिति न विरोधः। पन्थाः स्रोतस्तस्मै हितं पथ्यं स्रोतः शुद्धिकरमित्यर्थः। वस्तिशोधनमिति वस्तिशब्देन तात्स्थ्यान्मूत्रमुच्यत इत्यरुणः। यद्वा यथा यथा सलिलस्याग्निगुणसंयोगप्रकर्षस्तथा तथा कफादिहरत्वप्रकर्षोऽपि बोध्यः। उष्णोदकन्तु तन्त्रान्तरप्रसिद्धया साधनीयम्। तदुक्तमग्निवेशतन्त्रे।

शृतशीतं त्रिदोषघ्नं यदन्तर्वाष्पशीतलम् ।
शीतीकृतन्तु विष्टम्भि दुर्जरं पवनाहतम् ॥ ३२ ॥
न तत् पर्य्युषितं देयं कदाचिदपि जानता ।
व्यम्लीभवेत् पर्य्युषितं कफक्लेदि पिपासवे ॥३३॥
शृतं तोयं दिवा रात्रौ गुरु रात्रिशृतं दिवा ॥३४॥

क्वाथ्यमानन्तु यत्तोयं निष्फेनं निर्मलीकृतम् ।
भवत्यर्द्धावशिष्टन्तु तदुष्णोदकमिष्यते ॥ ३१ ॥

शृतशीतजलगुणमाह शृतशीतमिति । अन्तर्वाष्पं सत् कालप्रतीक्षया शीतलमित्यर्थः । पवनाहतं पवनेन शीतीकृतमिति भावः ॥ ३२ ॥

तदिति शृतशीतलं जलम् । अत्र देशादिभेदेन क्वथनप्रकर्षापकर्षावपि बोध्यौ यदाह वृद्धवाग्भटः ।

क्षीणपादत्रिभागार्द्धं देशर्त्तु गुरुलाववात् ।

धन्वसाधारणानूपेषु देशेषु तथा शीतोष्णवर्षोपलक्षिते च ऋतुत्रये यथाक्रमं क्षयितचतुर्भागत्रिभागार्द्धं सलिलमुपयोज्यमित्यर्थः । अत्रैवार्थे माधवकरस्तन्त्रान्तरमन्यादृशं लिखति तद्यथा

शारदं सार्द्धपादोनं पादहीनन्तु हैमनम् ।
शिशिरे च वसन्ते च ग्रीष्मे चार्द्धावशेषितम् ॥
अष्टभागावशिष्टन्तु कारयेत् प्रावृषं जलम् ।
तदुभयमपि प्रमाणं स्मृतिद्वैविध्यवत् ॥ ३३ ॥

अस्यैव शृतजलस्य विशेषान्तरमाह शृतमिति । दिवा शृतं तोयं रात्रौ गुरु भवति । रात्रिशृतन्तु दिवा गुरु भवतीत्यर्थः ॥ ३४ ॥

भौमानामम्भसां प्रातः सर्वेषां ग्रहणं मतम्।
तदा हि शैत्यं नैर्मल्यं तौ चापां परमौ गुणौ ॥३५
आन्तरीक्षन्तु वर्षासु कौपमौद्भिदमेव च।
अगस्त्योदयनैर्मल्यात् सर्वं शरदि शस्यते॥
सरस्तड़ागसम्भूतं हेमन्ते जलमिष्यते।
कौपचौण्डे वसन्ते तु ग्रीष्मे प्रास्रवणौद्भिदे॥
कौपं प्रावृषि सर्वं वा संस्कृतं वारि चेष्यते॥ ३६॥
हठशैवलपङ्कादिसञ्छन्नं दोषलञ्च तत्।

इदानीं भौमानां जलानां ग्रहणकालमाह भौमानामिति॥ ३५॥

इदानीं कालविशेषे जलविशेषोपयोगमाह आन्तरीक्षमिति॥ ३६॥

ननु वर्षासु आन्तरीक्षमिति यदुक्तं तन्नोपपद्यते जतूकर्णादिविरोधात्। तथा हि

वर्षासु चरन्ति घनैः सहोरगा वियति कीटलूताश्च।
तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्वम्॥

इत्यनेन खजलस्य वर्षासु निषेधात्। अन्यत्राप्युक्तम्।

वलाहकाद्याः सविषाः कीटलूताश्च खेचराः।
तद्विषोत्सर्गसंसर्गादग्राह्यं तत्तदा जलम्॥

इति। अत्र केचित् वर्षाशब्दो वर्षान्ते आश्वयुजे वर्त्तते तेनाश्विने गृहीतस्यान्तरीक्षस्यैव तत्रोपयोगः। भाद्रे तु आन्तरीक्षजलानुकारिणो भौमजलस्य कौपौद्भिदयोर्वा उपयोग इति न विरोध इत्याहुः। तन्न। आश्विने अगस्त्योदयेन सर्वजलस्यैव प्रसन्नत्वादिति प्रतिनियमानुपपत्तेः। किञ्च माहेन्द्रं तस्य-

# वायुर्क्किरणास्पृष्टं न पेयं साधनादृते ॥ ३७ ॥

शीतं वा क्वौपं सारसमेव वेत्यनेन चरके श्रावणभाद्ररूपवर्षास्वेव माहेन्द्रजलोपयोग उक्तः। न च तत्रापि भाद्राश्विनौ वर्षा इति वक्तुं शक्यते। तस्याशितीयोक्तर्त्तुक्रमानुसारेणैव ऋतुचर्य्याभिधानस्य तत्रोपक्रान्तत्वात्। अन्यथा प्रकरणविरोधः स्यात्। अन्ये तु ऋत्वन्तरगृहीतमान्तरीक्षं जलं वर्षासु पेयमित्याहुः। अस्मद्गुरुचरणास्तु द्विविधं हि आन्तरीक्षं लूतादिसम्बद्धासम्बद्धञ्च। तत्राद्यं सदोषं तत्परमेव जतूकर्णवचनमवगन्तव्यम्। द्वितीयन्तु निर्दोषं न च वर्षासु सर्पादिविषसहितमेव जलं मेघा वर्षन्तीत्यागमोऽस्ति। एतदभिप्रायेणैव सुश्रुतादौ गाङ्गसामुद्रव्यवस्था। तेन वर्षास्वेव यदा सविषप्राण्यादिसम्बन्धो भवति तदा सदोषं सामुद्रशब्दाभिधेयम्। अन्यथा तु निर्दोषं गाङ्गशब्दाभिधेयम्। तद्वर्षास्वपि ग्राह्यमेव अतएव गाङ्गसामुद्रपरीक्षापि तत्रोपपन्ना। अन्यथा वर्षाव्यतिरिक्तकाले लूतादिसम्बन्धस्य कालमहिम्नैवापगतत्वेन परीक्षाया अकिञ्चित्करत्वादित्याहुः। प्रपञ्चितमेतच्चरकतत्त्वदीपिकायामेव अस्माभिरिति नेह प्रतन्यते।

अगस्त्योदयनैर्मल्यात् सर्वं शरदि शस्यते।

इत्यत्र शरच्छब्देनाश्विनस्याप्युपग्रहो बोध्यः। चरके तस्याशितीये अन्यत्रापि आश्विनकार्त्तिकरूपशरद्येव सर्वजलप्रसादस्योक्तत्वात्। नैर्मल्यहेतोरगस्त्योदयस्य तत्रापि विद्यमानत्वाच्च। किंवा माघादिमासद्वयात्मकर्त्तुक्रमानुसारेण वर्षादयोऽत्र बोध्याः। तथा सति शरच्छब्देनाश्विनकार्त्तिकयोरेव ग्रहणम्। अस्मिंस्तु पक्षे हेमन्तविधानेन हेमन्ततुल्यतया शिशिराभिधानं समाधेयम्। यदुक्तम्

अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ।
मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ ३८ ॥

इति पानीयवर्गः ।

---

हेमन्तशिशिरे तुल्ये शिशिरेऽल्पविशेषणम् ।
तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ॥

इति । तथा कौपं प्राहृषीत्यत्र प्राहृट्शब्देन वर्षाप्रथमकालः श्रावणप्रथमरूपो बोध्यः । सरस्ताड़ागेत्यादि हेमन्ते सारसं कषायलघुत्वात् । ताड़ागञ्च कषायतया कटुपाकितया च चीयमानकफहरम् । तथा वसन्ते कौपं सक्षारत्वात् चौण्ड रूक्षत्वाच्च कफहरं युज्यते । ग्रीष्मे प्रास्रवणं पथ्यत्वात् शैत्याच्च । औद्भिदं मधुरत्वाच्च पित्तशमनं युक्तम् । कौपं प्राहृषीति तदाकाशजलेनानतिजुष्टत्वात् । सर्वं वा संस्कृतमिति सर्वस्यैवातिवर्षणेन दुष्टत्वात् । संस्कारः क्वथनरूपः कार्य्य इत्यर्थः ॥ ३७ ॥

याद्दशं जलं नोपयुज्यते तदाह हठेत्यादि । हठकुम्भिका पाङ्गा इति ख्यातः । दोषलमिति स्पर्शादिदोषयुक्तम् । तदुक्तं जलस्य स्पर्शरूपरसगन्धवीर्य्यविपाकदोषाः षड्भवन्ति । तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषाः । पङ्कसिकता शैवालवर्णता रूपदोषाः । व्यक्तरसता रसदोषः । अनिष्टगन्धता गन्धदोषः । यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः । यदुपयुक्तं चिराद्विपच्यते विष्टम्भयति च स विपाकदोष इति । साधनाद्दृत इति साधनं संस्कारः संस्कारश्चाग्निक्वथनसूर्य्यतापादिभिः सुश्रुतोक्तैः कार्य्यः ॥ ३७ ॥

क्षीरमष्टविधं गव्यमाजमौरभ्रमाहिषि।
कारेणवमथौष्ट्रञ्च वाड़वं मानुषं तथा॥ १॥
क्षीरं स्वादुरसं स्निग्धमोजस्यं धातुवर्द्धनम्।
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम्॥ २॥
गोक्षीरमनभिष्यन्दि स्निग्धं स्वादु रसायनम्।
रक्तपित्तहरं शीतं मधुरं रसपाकयोः॥
जीवनीयं तथा वातपित्तघ्नं परमं मतम्॥ ३॥

यत्र यत्र जलस्यातियोगो न कार्य्यस्तदाह अरोचक इत्यादि। मन्दमतिस्तोकम्॥ ३८॥

इति पानीयवर्गः।

---

पयःक्षीरसंज्ञासामान्यात् पय इव जीवनत्वादिगुणयोगाच्च तोयवर्गानन्तरं क्षीरवर्गः प्रस्तूयते। तत्र गव्यस्य प्रधानत्वात् तत्पूर्वमष्टविधं क्षीरं निर्दिशति क्षीरमिति। यद्यपि खड्गिमृगादीनामपि क्षीरमस्ति तथापि तस्यानुपयोगादिहानभिधानम्। तन्त्रेष्वप्यष्टावेव क्षीराण्युक्तानि॥ १॥

तत्र क्षीरसामान्यगुणमाह क्षीरमिति। धातुवर्द्धनत्वेन वृष्यत्वे सिद्धे वृष्यमिति वचनं अतिशयेन शुक्रजनकत्वं बोधयति॥ २॥

सामान्यगुणमभिधाय गव्यादिविशेषगुणमाह गोक्षीरमिति। अनभिष्यन्दीति। नञ् ईषदर्थे। सुश्रुते अल्पाभिष्यन्दीति वचनात्। अभिष्यन्दित्वञ्च दोषधातुमलस्रोतसां क्लेदजनकत्वम्। रक्तपित्तहरत्वमवस्थाविशेषे ज्ञेयम्॥ ३॥

छागं कषायमधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ।
नात्यम्बुपानाद् व्यायामात् सर्वव्याधिहरं पयः॥४॥
मेषीक्षीरं गुरु स्वादु स्निग्धोष्णं कफपित्तकृत् ।
शुद्धेऽनिले भवेत् पथ्यं सेके चानिलशोणिते ॥५॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहादूनमनिद्राणामत्यग्नीनां हितञ्च तत् ॥६॥

सर्वव्याधिहरमिति। सर्वदोषहरं कारणे कार्य्योपचारात् व्याधिशब्दो दोषे वर्त्तते। अतएव चरकेणोक्तम्। समानो हि रोगशब्दो दोषेषु व्याधिषु च वर्त्तते। किंवा सर्वशब्दो विपुलवचनः ॥ ४ ॥

उष्णमिति। सामान्योक्तक्षीरशीतगुणापवादरूपम्। एवमन्यत्राप्येवंजातीये व्याख्येयम्। कफपित्तकृदिति। कफपित्तकरम्। पित्तश्लेष्मलमाविकमिति चरकवचनात्। शुद्धेऽनिले इति। दोषान्तरेणासम्पृक्ते अनावृते च। अनिलशोणिते शोणितावृतवाते सेके परिषेकनिमित्तं हितमित्यर्थः ॥ ५ ॥

महिषीक्षीरं गव्यात् क्षीरात् गव्यक्षीरमपेक्ष्य गुरुतरमतिशयेन गुरु तथा शीततरञ्च स्नेहात् पुनरूनं हीनमित्यर्थः। इदं पुनरसङ्गतं प्रत्यक्षविरोधात्। प्रत्यक्षमेव महिषीक्षीरादधिकंनैव घृतं दृश्यते तथा जतूकर्णेऽप्युक्तम्। गुरु शीतस्निग्धतरं माहिषमतिबल्यबृंहणञ्चाग्न्यमिति। सुश्रुतेऽप्युक्तं पच्यते स्निग्धतरमिति। तस्मादत्र गव्यस्नेहादूनमिति योज्यम्। तेन

हस्तिनीनां पयो बल्यं गुरु स्थैर्य्यकरं वरम् ।
ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ॥
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ॥७॥
उष्णमैकशफं बल्यं शाखावातहरं पयः ।
ईषदम्लं स्वादु रूक्षं लवणानुरसं लघु ॥ ८ ॥
नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ।
नस्याश्च्योतनयो: पथ्यं जीवनं लघु दीपनम् ॥९॥
क्षीरसन्तानिका वृष्या स्निग्धा पित्तानिलापहा१०
पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्त्तितम् ।
तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् ॥ ११ ॥

महिषीक्षीरं गव्यस्नेहादूनं हीनम् । गव्यक्षीरात् पुनः स्नेहाधिकमेवेत्यर्थं इति चन्द्रिका । अन्ये तु स्नेहान्यूनमिति पठित्वा स्नेहाधिकमित्यर्थं कुर्वन्ति ॥ ६ ॥

एकः शफः खुरो यासां ता एकशफाः । अत्राश्वाया इति वक्तव्ये यदैकशफमिति सामान्यशब्दप्रयोगं करोति तद्वेगसरीप्रभृतीनामप्येकशफानां क्षीरग्रहणार्थम् । शाखावातहरमित्यत्र केचित् शाखाशब्देन बाहुसक्थनी चाहुः । अन्ये तु वक्तादीनाहुः । धान्याम्लस्येवोभयत्राधारशक्तिप्रभावेण परस्परविरुद्धकार्य्यद्वयं भवति । तद्‌यथा वहिरन्तः पित्तहरकरत्वम् । एवं शाखागतवातहरत्वम् । कुक्षिगतवातकरत्वञ्चास्याधारशक्तिप्रभावेण मन्तव्यमित्याहुः ॥ ८ ॥

आश्च्योतनमक्षिपूरणम् ॥ ९ ॥

क्षीरसन्तानिका दुग्धसरः ॥ १० ॥

वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम्॥१२
धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा॥१३॥
तदेवातिशृतं सर्वं गुरु बृंहणमुच्यते ॥ १४ ॥
अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत्।
वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत् ॥१५॥
दध्यम्लं मधुरं ग्राहि गुरूष्णं वातनाशनम्।
मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ॥

असंस्कृतस्य तथा संस्कृतस्य क्षीरस्य क्रमेण गुणमाह पय इत्यादि। आममित्यशृतम् ॥ ११ ॥

स्त्रीस्तन्यस्य पुनः शृतत्वं दोषायेत्याह वर्ज्जयित्वेति ॥ १२ ॥

सर्वक्षीराणामेव दोहकालधारापातोष्णानां गुणमाह। धारोष्णमिति सद्योदोहधारासम्बन्धोष्णतायुक्तम्। गुणवदिति प्रशस्तरसायनत्वगुणयुक्तम्। यदुक्तं भोजे।

पयोऽभिष्यन्दि गुर्वामं शृतोष्णं कफवातजित्।
शृतशीतन्तु पित्तघ्नं सद्यो दुग्धं रसायनम् ॥

इति। विपरीतमतोऽन्यथेति न तथा प्रशस्तगुणम् ॥ १३ ॥

अतिशृतमित्यतिपाकेन घनीभूतम् ॥ १४ ॥

क्षीरस्यैवावस्थाविशेषेण वर्जनीयतामाह अनिष्टगन्धमिति। अम्लत्वं सलवणत्वञ्चैव विदाहात्। गवादीनामत्यर्थलवणसेवनाद्वा सलवणम्। विग्रथितमिति अम्लादियोगेन विग्रथिततामापन्नम् ॥ १५ ॥

क्षीरमनु क्षीरकार्य्यतया तद्विकारेऽभिधातव्ये मङ्गल्यतया प्रथमं दधिगुणमाह दधीति।

अत्राम्लमधुरत्वेन सुजातत्वं लक्षयति। मन्दजातस्यास्य अनम्ल-

रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥
पीनसे मूत्रकृच्छ्रे च रूक्षन्तु ग्रहणीगदे ॥ १६ ॥
गव्यं दधि च मङ्गल्यं वातघ्नं शुचि रोचकम्।
स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम् ॥१७॥
दध्याजं कफपित्तघ्नं लघु वातक्षयापहम्।
दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥
विपाके मधुरं वृष्यं रक्तपित्तप्रसादनम्।
बलाशवर्द्धनं स्निग्धं विशेषाद्दधि माहिषम् ॥१८॥

त्वात् सुजातकालात्यये चात्यम्लत्वात् अत्राम्लत्वोष्णत्वस्निग्धत्वाल्लभ्यमानमपि वातनाशनत्वं यत् पुनरुच्यते तत् प्रकर्षार्थम्। तथाम्लत्वादियुक्तस्यापि वातहन्तृत्वादिव्यभिचारदर्शनाच्चेति ज्ञेयम्। व्यभिचारोदाहरणानि मन्दकमन्दजातमद्यादीन्यनुसर्त्तव्यानि। न्यायश्चायमेवंजातीये सर्वत्रैव बोध्यः। अरुचौ शस्तमित्युक्तापि रोचिष्णु इति वचनम् अरोचकहरस्यापि तिक्तरसस्य रोचिष्णुत्वं व्यभिचारदर्शनाज्ज्ञेयम्। शीतक इति विषमज्वरविशेषणम्। पीनस इति चतुर्विधपीनसे प्रभावात् हितम्। किंवा पीनसपाचकत्वात् सर्वत्र हितम्। अन्ये तु पीनसे शस्तमिति यद्यपि सामान्यत एवोक्तम् तथापि योग्यतया वातिकपीनसे एव शस्तमित्याहुः। रूक्षसुहृतसारं पुनर्ग्रहणीगदे हितमिति योज्यम् ॥ १६ ॥

सामान्यगुणमभिधाय विशेषगुणमाह गव्यमिति। मङ्गल्यत्वमिह प्रभावात् ॥ १७ ॥

अत्र विशेषादिति पदं स्निग्धमित्यनेन बलाशवर्द्धनमित्यनेन च सम्बध्यते ॥ १८ ॥

कोपनं कफवातानां दुर्नाम्नाञ्चाविकं दधि ॥१९॥
दीपनीयमचक्षुष्यं वातलं वाडवं दधि।
रूक्षमुष्णकषायञ्च कफमूत्रापहञ्च तत् ॥ २० ॥
स्निग्धं विपाके मधुरं बल्यं सन्तर्पणं गुरु।
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्य्या गुणोत्तरम् ॥२१॥
लघु पाके बलाशघ्नं वीर्य्योष्णं पक्तिनाशनम्।
कषायानुरसं नाग्या दधि वर्च्चोविबन्धनम् ॥२२॥
दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक्।
विज्ञेयमेव सर्वेषु गव्यमेव गुणोत्तरम् ॥ २३ ॥
वातघ्नं कफकृत् स्निग्धं बृंहणं नातिपित्तकृत्।
कुर्य्याद्भक्ताभिलाषञ्च दधि यत् सुपरिस्रुतम् ॥२४॥
शृतक्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम्।

कफवातानां दुर्नाम्नाञ्च कोपनमित्यन्वयः। कफवाताभ्यामिति पाठे सम्भूतानामिति शेषः। तेन कफवाताभ्यां सम्भूतानां दुर्नाम्नां कोपनमित्यर्थः ॥ १९ ॥

अचक्षुष्यत्वमिह प्रभावादिति चन्द्रिका। कफमूत्रापहत्वं च रूक्षोष्णत्वात् ॥ २० ॥

चक्षुष्यमग्र्यमिति श्रेष्ठं चक्षुष्यमित्यर्थः। चक्षुर्हितत्वमस्य प्रभावात्। गुणोत्तरमिति गुणैः प्रधानम् ॥ २१ ॥

सर्वेषु दधिषु गव्यस्य प्राधान्यमाह दधीनीति ॥ २३ ॥

इदानीं तस्यैव दध्नोऽवस्थान्तरेषु गुणोत्तरं दर्शयन्नाह वातघ्नमिति। सुपरिस्रुतं सुष्ठु गलितद्रवभागम् ॥ २४ ॥

वातपित्तहरं रुच्यं धात्वग्निबलवर्द्धनम् ॥ २५ ॥
दधि त्वसारं रूक्षञ्च ग्राहि विष्टम्भि वातलम् ।
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥२६॥
दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ।
वह्नेर्विधमनश्चापि कफशुक्रविवर्द्धनः ॥ २७ ॥
तक्रं लघु कषायाम्लं दीपनं कफवातजित् ।
शोथोदरार्शोग्रहणीदोषमूत्रग्रहारुचि ।
प्लीहगुल्मघृतव्यापद्गरपाण्ड्वामयान् जयेत् ॥२८॥
मस्तु तद्वत् सरं श्रोतःशोधि विष्टम्भजिल्लघु ॥२९॥
ससरं निर्जलं घोलं तक्रं पादजलान्वितम् ।

क्वथितक्षीरस्य दध्नो गुणमाह शृतक्षीरादिति ॥ २५ ॥

उद्धृतस्नेहस्य दुग्धस्य दध्नो गुणमाह दधीति । असारमुद्धृतस्नेहम् ॥ २६ ॥

दधिसरगुणमाह दध्न इति । वह्नेर्विधमनो वह्निमान्द्यकरः । सरो दध्न उपरितनो भागः । वृष्यः शुक्रविवर्द्धन इति पदद्वयोपादानं स्तुतिवृद्धिकरभेदेन वृष्यद्वयपरिग्रहार्थम् ॥ २७ ॥

तक्रगुणमाह तक्रमिति ॥ २८ ॥

अतिदेशेन मस्तुगुणमाह मस्त्विति । तद्वदिति गुणैस्तक्रवत् ॥ २९ ॥

दध्नः संस्कारविशेषेण नामविशेषानभिधाय गुणविशेषानाह ससरमिति । चरकादिभिस्तक्रं विहाय एते त्रयो भेदाः कण्ठरवेण नोक्ताः यतो घोलस्य दध्न एवान्तर्भावः । यतः ससरं निर्जलं दधि मथितं सत् दध्नो नातिरिच्यते । मन्थनसंस्कारेण

घर्षोदकमुदश्वित् स्यान्मथितं सरवर्जितम् ॥३०॥
घोलं पित्तानिलहरं तक्रं दोषत्रयापहम्।
उदश्वित् श्लेष्मलस्त्वेव मथितं कफपित्तनुत् ॥३१॥
वातेऽम्लं सैन्धवोपेतं पित्ते स्वादु सशर्करम्।
पिबेत्तक्रं कफे चापि व्योषक्षारसमायुतम् ॥३२॥
नैव तक्रं क्षते दद्यात् नोष्णकाले न दुर्बले।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपित्तके ॥ ३३ ॥

परं तत्र लाघवं जनितम्। उदश्विन्मथितयोस्तक्र एवान्तर्भावः। अतएवोक्तं तन्त्रान्तरे।

मन्थनादिपृथग्भूतस्नेहमर्द्धोदकञ्च यत्।
नातिसान्द्रद्रवं तक्रं स्वाद्वम्लतुवरं सरम् ॥
अजलं स्नेहहीनं यत् तत्तक्रं कफनाशनम्।

इति। चरके तु त्रिविधं तक्रमुक्तम्।

रूक्षमर्द्धोद्धृतं स्नेहं यतश्चानुद्धृतं घृतम्।
तक्रं दोषाग्निबलवित्त्रिविधं सम्प्रयोजयेदिति ॥३०॥

इदानीमस्यैव भेदचतुष्टयस्य गुणमाह घोलमिति। यद्यपि पूर्वं तक्रस्य वातकफहरत्वमेवोक्तं तथापि मधुरत्वेन मधुरपाकित्वेन च पित्ताजनकत्वात् द्रव्यान्तरसंयोगाद्वा पित्तशमनमपीति मत्वा दोषत्रयापहत्वमस्योक्तम्। सुश्रुते तु मधुरस्य तक्रस्य पित्तहरत्वं साक्षादेवोक्तम्। तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तशमनञ्चेति ॥ ३१ ॥

यत्र यादृशं तक्रं युक्तं तदाह वात इति ॥ ३२ ॥

तक्रस्याविषयं तक्रविषयञ्च श्लोकाभ्यामाह नेति। उष्णकाले शरदि ग्रीष्मे च ॥ ३३ ॥

ग्राहिणी वातला रूक्षा विज्ञेया तक्रकूर्चिका ॥३४

तक्राल्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥३५॥

किलाटोऽनिलहा वृष्यः कफनिद्राकरो गुरुः ॥३६

मधुरो वृंहणस्तद्वत् पीयूषोऽपि स मोरटः ॥३७॥

तक्रस्य हेत्वन्तरग्रथितस्य घनो भागस्तक्रकूर्चिकेत्युच्यते तद्गुणमाह ग्राहिणीति ॥ ३४ ॥

तक्रकूर्चिकादधिकूर्चिकाभ्यां जातस्य मस्तुनो गुणविशेषमाह तक्रादिति। मण्ड इति मस्तु तस्य विशेषणं कूर्चिकादधितक्रज इति कूर्चिकाभूतं यद्दधि कूर्चिकाभूतञ्च यत्तक्रं ताभ्यां जातो मण्डस्तक्राल्लघुतर इत्यर्थः। दधिकूर्चिकालक्षणं यथा॥

दध्ना सह पयः पक्वं सा भवेद्दधिकूर्चिका॥

ये तु दधिकूर्चो च तक्रवदिति पठन्ति तन्मते दधिकूर्चिका तक्रवदिति तक्रकूर्चिकासमानगुणा अन्ये दधिकूर्चिका तक्रज इति पठन्ति व्याचक्षते च॥ प्रकृतदधिजस्तथा कूर्चिकाभूतदधिजः तथा कूर्चिकाभूततक्रजश्च मण्ड इति मस्तुत्रयस्यायं गुणनिर्देश इति ॥ ३५ ॥

कूर्चिकाप्रस्तावात् क्षीरकूर्चिकागुणमाह किलाट इति। नष्टक्षीरपिण्डं यमाहुर्लोकाः क्षीरसा इति ॥ ३६ ॥

पीयूषमोरटयोर्गुणमाह मधुर इति। तद्वदिति किलाटतुल्यः। पीयूषमोरटयोर्लक्षणं यथा

क्षीरं सद्यः प्रसूतायाः पीयूषमिति संज्ञितम्।
सप्तरात्रात् परं क्षीरमप्रसन्नञ्च मोरटम्॥

इति। जेज्जड़स्तु मोरटस्थाने मोरणं पठन्ति व्याचष्टे च। मोरणो नष्टक्षीरद्रवभाग इति ॥ ३७ ॥

नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत्।
संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासजित् ३८
क्षीरोद्भवन्तु संग्राहि रक्तपित्ताक्षिरोगनुत् ॥३९॥
विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः।
विकल्पानवशिष्टांस्तु क्षीरवीर्य्यं समादिशेत् ॥४०॥

तक्रनिष्पत्त्यनन्तरं नवनीतमुत्पद्यत इति तक्रानन्तरं नवनीतगुणानाह नवनीतमिति। नवमिति सद्यस्कम्। एतेनाभिनवस्यैवैते गुणाः प्रकर्षवन्तो भवन्तीति दर्शयति॥ ३८॥

क्षीरमथनोत्थितस्य नवनीतस्य गुणमाह क्षीरोद्भवमिति॥३९

ननु क्षीरं दधि च गव्यादीनां प्रतिप्रतिगुणत उक्तम्। मस्तु तक्रादयस्तु सामान्येनोक्ताः तत् किं गव्यमस्त्वादय एते गुणतो वाच्या न वेत्याशङ्कायामाह विकल्प इति। विकल्पो भेदः प्रकार इति यावत्। दध्यादिरिति। अतद्गुणसंविज्ञान बहुव्रीहिः। तेन मस्तुतक्रादिरूप इत्यर्थः। श्रेष्ठ इति हेतुगर्भविशेषणम्। तेन श्रेष्ठत्वाद्गव्य एवोक्तः। न पुनराजावीप्रभृतीनामित्यर्थः। अभिवर्णितः कथितः। यद्येवं छागादिमस्त्वादीनां गुणाः कथं ज्ञातव्या इत्याह विकल्पानित्यादि। वीर्य्यशब्दोऽत्र गुणवचनः। तेन पञ्चमी ल्यप्लोपे। तेन छागादिक्षीराणां ये गुणा उक्तास्तान् सुवीक्ष्य तन्मस्तुतक्रादावपि तत्सदृशान् गुणान् वदेदित्यर्थः। केचिदिमं श्लोकमनार्षमिति वदन्ति। तत्तु न सम्यक्। यतोऽपठ्यमानेऽस्मिन् श्लोके अजादितक्रादिगुणानुक्ते न्यूनता स्यात्। न वा तक्रादिविकल्पस्य सामान्यगुणोक्तिरिति वक्तुं युज्यते। सुव्यक्तपरस्परगुणभेदादजादितक्राणाम्। अतएवोक्तं वाग्भटेन।

घृतं बुद्ध्यग्निशुक्रौजोमेदःस्मृतिकफावहम्।
वातपित्तविषोन्मादशोषालक्ष्मीजरापहम्।
स्नेहोत्तमं योगवाहि सर्वथा मधुरं हिमम् ॥४१॥
गव्यं घृतं घृतश्रेष्ठं चक्षुष्यं बलवर्द्धनम्।
विपाके मधुरं श्रेष्ठं वातपित्तविषापहम् ॥४२॥
माहिषन्तु घृतं स्वादु पित्तास्रानिलनुद्धिमम् ॥४३॥
छागं घृतन्तु चक्षुष्यं लघ्वग्निबलवर्द्धनम् ॥ ४४ ॥
आविकादीनि सर्पींषि बुद्ध्वा स्वक्षीरवद्वदेत् ॥४५॥
सर्पिः पुराणं त्रिमलप्रतिश्यातिमिरापहम्।

विद्याद्दधिघृतादीनां गुणदोषान् यथा पय इति ॥ ४० ॥

नवनीतसम्भवात् घृतस्य नवनीतानन्तरं घृतगुणमाह घृतमिति। कफावहमिति कफकरम्। यत्तु त्रिदोषापकर्षणमिति सुश्रुतेनोक्तम् तत् संस्कारेण कफहरत्वादिति ज्ञेयम्। अतएव चरकेऽपि संस्काराक्तु जयेत् कफमित्युक्तम्। योगवाहीति यैर्यैर्द्रव्यैः संस्क्रियते तेषां तेषामेव गुणानावहतीत्यर्थः। सर्वथा मधुरमिति रसे पाके च मधुरमित्यर्थः। तथा सर्वथा हिमं निपातेऽधिवासे च शीतमित्यर्थः। न तु काञ्जिकादिवत् निपातमात्रे शीतमित्यर्थः ॥ ४१ ॥

इदानीं विशिष्टघृतगुणमाह गव्यमिति। अत्र सामान्यगुणाभिहितमधुरत्वादेः पुनरभिधानमुत्कर्षार्थम्। अत्र द्वितीयं श्रेष्ठमिति पदं चक्षुष्यमित्यादिषु सर्वत्रैव योज्यम्। श्रेष्ठमित्यतिशयेन चक्षुष्यमतिशयेन बलवर्द्धनमित्यादि ॥ ४२ ॥

अनुक्तसर्पिर्गुणमतिदेशेनाह आविकादीनीति ॥ ४५ ॥

मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥४६॥
क्षीरघृतन्तु संग्राहि तर्पणं नेत्ररोगनुत् ॥ ४७ ॥
सर्पिर्मण्डः सरः स्वादुर्योनिश्रोत्रशिरोऽक्षिजान् ।
गदान् जयति शोथघ्नो रूक्षस्तीक्ष्णस्तनुश्च सः ॥४८॥
इति क्षीरवर्गः ।

---

तैलं संयोगसंस्कारात् सर्वरोगहरं स्मृतम् ।
कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ॥

पुराणसर्पिर्गुणमाह सर्पिरिति । प्रतिश्याशब्दः प्रतिश्यायवचनः । पुराणघृतलक्षणं यथा

उग्रगन्धं पुराणं स्याद् दशवर्षस्थितं घृतम् ।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥

यथा यथा हि जीर्णत्वप्रकर्षस्तथा तथा गुणोत्कर्षः । उक्तं हि हारीते ।

यथा यथा जरां याति गुणवत् स्यात्तथा तथा ॥ ४६ ॥

क्षीरोत्थितघृतगुणमाह क्षीरघृतमिति ॥ ४७ ॥

सर्पिर्मण्डगुणमाह सर्पिर्मण्ड इति । सर्पिषस्तप्तस्य स्त्यानीभवदुपरितनो भागः सर्पिर्मण्डः ॥ ४८ ॥

इति क्षीरवर्गः ।

---

जङ्गमस्नेहोत्तमं घृतमभिधाय स्थावरस्नेहोत्तमं तैलमाह तैलमिति । तैलमिति तिलोद्भवम् । संयोगसंस्कारादिति संयोगात् संस्काराच्चेत्यर्थः । संस्कारस्तैलस्य भेषजैः पाकः । संयोग-

पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्द्धनम् ।
वातघ्नमुत्तमं बल्यं त्वच्यं मेधाग्निवर्द्धनम् ॥ १ ॥
सार्षपं कटु तीक्ष्णोष्णं कफशुक्रानिलापहम् ।
लघु पित्तास्रकृत् कोठकुष्ठार्शोव्रणजन्तुजित् ॥२॥
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ।
तद्वस्तिषु च पानेषु नस्ये कर्णाक्षिपूरणे ॥
अन्नपानविधौ चापि प्रयोज्यं वातशान्तये ॥ ३ ॥
तैलमेरण्डजं तिक्तं कटु स्वादुरसं गुरु ।
व्रध्नगुल्मानिलकफानुदरान् विषमज्वरम् ॥
रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ॥५॥
उमाकुसुम्भजं तूष्णं त्वग्दोषकफपित्तकृत् ॥ ६ ॥
करञ्जनिम्बतैलन्तु नात्युष्णं कफपित्तजित् ।
तिक्तं क्रिमिहरं तैलं शेषं योनिवशादिशेत् ॥७॥

स्ववचारणायां ज्ञेयः । सूक्ष्ममिति सूक्ष्मस्रोतोऽनुसारित्वात् । व्यवायीति अपक्वमेव सकलदेहव्यापकात् । त्वच्यमित्यभ्यङ्गात् । यत्तु वाग्भटे त्वग्दोषकरत्वमुक्तं तैलस्य तद्भक्षणाभिप्रायेणेति न विरोधः । अन्ये तु तत्रापि त्वग्दोषहृदिति पठन्ति । तत्तु न टीकाकृद्भिर्व्याख्यातम् ॥ १ ॥

अन्नपानविधौ अन्नपानसंस्कारे ॥ ३ ॥

उमा अतसी ॥ ६ ॥

सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं विशिष्यते।
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि॥ ८॥

तिक्तमित्यन्तः करञ्जनिम्बयोस्तैलगुणः। तैलमित्यादिना तु अनुक्ततैलगुण उक्तः॥ ७॥

स्थावरस्नेहेषु तिलतैलप्राधान्यमाह सर्वेभ्य इति॥ ८॥

ननु तैलपदे तैलत्वं प्रवृत्तिनिमित्तम्। तच्च न तावत्तिलोद्भवत्वम्। सर्षपतैलादावव्याप्तेः। नापि वीजप्रभवत्वं तद्गतरूपादावतिव्याप्तिः। नापि वीजप्रभवस्नेहत्वं सारतैलादावव्याप्तेः। अपि च वीजप्रभवस्नेहत्वं न तावत् स्नेहरूपगुणवृत्तिः। तैलं गन्धवदिति प्रत्ययस्य सर्वजनसाधारणस्य भ्रान्तित्वापत्तेः। नापि स्नेहाश्रयद्रव्यवृत्तिः। वीजद्रवमात्रस्यैव तैलत्वापत्तिरिति अनुपपत्तिं हृदि निधाय सर्षपादिस्नेहेष्वपि तैलशब्दं व्युत्पादयन्नाह निष्पत्तेरिति। तिले यथा तैलं निष्पद्यते चूर्णीकरणयन्त्रपातनादिना तथा सर्षपादावपि स्नेहाकर्षणात्। भवति च समाननिष्पत्तिकतया तच्छब्दता यथा वितुषे धान्ये तण्डुलशब्दो वृत्तः स वितुषे विडङ्गेऽपि वर्त्तते। यथा विडङ्गतण्डुला इति। तद्गुणत्वेन तच्छब्दता यथा गौर्वाहिक इति। तद्गुणत्वञ्च सुश्रुतेनोक्तम् यथा

यावन्तः स्थावराः स्नेहाः समासात् परिकीर्त्तिताः।
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः॥

एतेन तिलस्य विकारस्तैलमिति योगे बाधकाभावात्। तिलप्रभवस्नेह एव तैलपदप्रयोगात् स्नेहत्वेऽपि शक्तेस्तैलपदं योगरूढम्। सार्षपादौ तु तैलपदप्रयोगो भाक्त इति भावः। अन्ये तु गन्धरसविशेषाभिव्यङ्ग्यं तैलत्वं जातिः। अतएव घृत-

वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ।
मांसानुरूपगन्धौ च विद्यान्मेदोऽपि ताविव॥९॥
इति तैलवर्गः।

---

इक्षोरसो हिमो वृष्यस्तर्पणो जीवनः सरः।
वातासृक्पित्तजित् स्वादुः स्निग्धः प्रीणनबृंहणः।
रसो दन्तकृतः श्लेष्मकारणं न विदाहवान्॥ १ ॥
यान्त्रिकस्तु विदाही स्याद्गुरुस्त्वग्ग्रन्थियोगतः॥२॥

तैलसंशये गन्धरसविशेषनिश्चयात् तैलत्वनिश्चय इति सार्षप-स्नेहादीनामपि तैलत्वमित्याहुः॥ ८ ॥

स्नेहत्वसामान्याद् वसादीनामपि गुणमाह वसेति॥ ९ ॥

इति तैलवर्गः।

---

माधुर्य्यसामान्यात् क्षीरवर्गमनु इक्षुविकृतिवर्गेऽभिधातव्ये उपोद्घातागतेन तैलवर्गेण व्यवधानं कृतम्। सम्प्रति यथोक्तो-पोद्घातागतं तैलवर्गमभिधाय प्रकृतमिक्षुविकृतिवर्गमाह इक्षो-रिति। दन्तकृत इति दन्तपीड़नेन कृतः॥ १ ॥

यान्त्रिक इति यन्त्रपीड़नेन कृतः। ननु यान्त्रिकस्य इक्षु-रसस्य विदाहित्वे सति रक्तपित्तहरत्वं यत् तद्विरुध्यते। यथा मधूदकस्येक्षुरसस्य चापि पानाच्छमं गच्छति रक्तपित्तमिति। तन्न। यतो दन्तनिष्पीड़ितस्यैवाविदाहिनो रक्तपित्ते ग्रहणं भवि-ष्यति। ;किंवा यान्त्रिकस्यापि विदाहकारणत्वगादिसंयोगा-देस्त्यागं कृत्वोपयोगः कार्य्यः। तेन यान्त्रिकस्तु विदाहीति वचनं

अतीव मधुरो मूले मध्ये मधुर एव च।
अग्रे चाक्षिषु विज्ञेय इक्षूणां लवणो रसः॥ ३॥
पक्वो रसो गुरुः स्निग्धः स तीक्ष्णः कफवातजित्४
फाणितं गुर्वभिष्यन्दि बृंहणं कफशुक्रलम्॥ ५॥
रूक्षं मधूकपुष्पोत्थं फाणितं त्वथ वातहृत्।
कफदं मधुरं पाके कषायं वस्तिदूषणम्॥ ६॥
गुड़ो वृष्यो गुरुः स्निग्धः सक्षारो मूत्रशोधनः।
नातिपित्तहरो मेदःकफक्रिमिवलप्रदः॥ ७॥

प्रायोवादमाश्रित्य वोध्यम्। अन्ये त्वेतद्दोषभिया विदाहीति शीघ्रपाकीति व्याख्यानयन्ति॥ २॥

इक्षूणामवयवविशेषेण गुणविशेषमाह अतीवेति अक्षिष्विति। ग्रन्थिषु चन्द्रिकाकारस्तु इक्षूणामक्षिषु सर्वसन्धिषु प्ररोहजननसमर्था अङ्कुरा इत्याह। अन्ये त्वक्षु चेति पठन्ति तत् सुबोधम्॥ ३॥

पक्वस्येक्षुरसस्य गुणमाह पक्व इति॥ सतीक्ष्ण ईषत्तीक्ष्ण इत्यर्थः॥ ४॥

फाणितं तन्तुलीभूतो रसः। अस्यैव तन्त्रान्तरे क्षुद्रगुड़ इति संज्ञा। तदुक्तं क्षुद्रो गुड़श्चतुर्भागावशेषित इति॥ ५॥

फाणितप्रसङ्गान्मधूकपुष्पकृतफाणितगुणमाह रूक्षमिति॥६॥

इक्षुरसस्यैव पाकादतिघनभावं गतस्य गुड़संज्ञा तस्य गुणमाह गुड़ इति॥ सक्षार इति क्षारसहचरितलवणरसः क्षारशब्देनोच्यते। स्वामिदासादयस्तु व्याख्यातारः क्षाराधिकारे क्षारस्य रसत्वमेव मन्यन्ते। तत्तु न सम्यक् सर्वतन्त्रविरोधात्।

पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ॥८॥
स पुराणोऽधिकगुणो गुड़ः पथ्यतमः स्मृतः ॥९॥
खण्डं वृष्यतमं बल्यं चक्षुष्यं बृंहणं तथा।
वातपित्तहरं नातिस्निग्धं हृद्यं सुखप्रदम् ॥१०॥
शर्करा वातपित्तास्रघ्नी मूर्च्छाच्छर्दिविषापहा ॥११॥
तमराजस्तु तृष्णाघ्नो ज्वरदाहास्रपित्तजित् ॥१२॥

उक्तं हि चरके क्षरणात् क्षारो नासौ रसो द्रव्यमिति। नातिपित्तहर इति। मधुरत्वेऽपि सलवणत्वात् ॥ ७ ॥

अपहृतमलत्वेन शुद्धो यो गुड़स्तस्य गुणमाह पित्तघ्न इति। शुद्धो मलापगमनेन धवल इत्यर्थः ॥ ८ ॥

पुराणगुड़स्य गुणमाह स इति॥ पथ्यतम इति गुड़ान्तरापेक्षया। चन्द्रिकाकारस्तु पथि स्रोतसि हितः पथ्यः पथ्यतमः सर्वेषां स्रोतोहितानां श्रेष्ठ इत्यर्थः। पथ्यतमस्तु जीर्णत्वेन रौक्ष्यलाघवादिगुणयोगात्। अतएवोक्तं गुणाधिक इति। गुणाश्चात्र स्रोतः शोधनाधिकारिण एव रौक्ष्यलाघवादयो न तु स्नेहादयः। पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुर्विति युक्तिविरोधात्। अप्रस्तुतत्वात् स्नेहादीनां स्रोतःशुद्ध्यकरणत्वाच्चेति व्याचष्टे। डल्वनस्तु स पुराण इत्यस्य ईषत् पुराणमित्यर्थं व्याख्यातवान् ॥ ९ ॥

तस्यैव गुड़स्य संस्कारान्तरेण नामान्तरं गुणान्तरं च निर्दिशन्नाह खण्डमिति ॥ १० ॥

अत्र शर्कराशब्दः सामान्यवचनः। तेन यासशर्करामधुशर्करागुड़शर्कराणामेवायं गुण इति बोध्यः ॥ ११ ॥

तमराजः शर्कराभेद इति डल्वनः ॥ १२ ॥

वृष्या चीणचतहिता सस्नेहा गुड़शर्करा ॥ १३ ॥
मधुजा शर्करा रूक्षा तृष्णाच्छर्द्यतिसारनुत् ।
तद्गुणा तिक्तमधुरा सस्नेहा यासशर्करा ॥ १४ ॥
गुड़मत्स्यण्डिकाखण्डशर्करा विमलाः परम् ॥१५॥
यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ।
स्नेहगौरवशैत्यानि सरत्वञ्च तथा तथा ॥ १६ ॥
मधु स्वादुरसं शीतं व्रणशोधनरोपणम् ।
कषायानुरसं रूक्षं वर्ल्यं दीपनलेखनम् ॥

गुडपदं यासशर्करामधुशर्करयोर्व्यवच्छेदार्थम् ॥ १३ ॥

मधुनः कालान्तरावस्थानादति घनीभूतमवयवं मधुशर्करेति वदन्ति । दुरालभाकाथस्य घनीभावाद् यासशर्करेत्युच्यते ॥१४॥

गुड़ादीनामुत्तरोत्तरं नैर्मल्यातिशयमाह गुड़ेत्यादि । परमित्युत्तरोत्तरं विमलाः । तेन गुडापेक्षया मत्स्यण्डिका विमला मत्स्यण्डिकापेक्षया खण्डो विमलः खण्डापेक्षया च शर्करा इति । मत्स्यण्डिकाश्च खण्डमध्ये कृत्रिमाः पाकादिना निष्पन्नत्वात् शालूकाकृतयोऽतिकठिना भवन्ति ॥ १५ ॥

एतेषामेव यथा यथा वैमल्यप्रकर्षस्तथा तथा माधुर्य्यादिप्रकर्षोऽपीत्याह यथेति ॥ अत्र गौरवस्थाने केचिल्लाघवं पठन्ति वदन्ति च । लाघवं हि गुणः प्रशस्तो न गौरवम् उत्तरोत्तरञ्च प्राशस्त्यमेषामुक्तम् । किन्तु यथा यथा सारत्वं भवति तथा तथा गौरवमप्युपपन्नम् ॥ १६ ॥

माधुर्य्यसामान्यात् मधुशर्कराप्रसङ्गाच्चानन्तरं मधुगुणाभिधानं तस्य सामान्यगुणमाह मध्विति ॥ सन्धानमिति भग्नादिसन्धानकरम् । नन्वत्र लघ्विति पठ्यते । तथा त्रिदोषप्रशमन-

सन्धानं लघु चक्षुष्यं स्वर्य्यं हृद्यं त्रिदोषनुत् ।
श्वासहिक्काविषहरमुष्णं खाम्बु विरोधि च ॥१७॥

मिति तथाच चरकविरोधः । तत्र हि वातलं गुरु शीतञ्च रक्त-पित्तापहं मध्विति पठति । एवं वाग्भटेऽपि व्रणशोधनसन्धान-रोपणं वातलं मध्विति पठ्यते । सत्यम् । तत्र यल्लघुत्वमुक्तं तत् पुराणमध्वपेक्षया । इदं हि वचनं सौश्रुतम् । सुश्रुते च पुराण-मेव मध्वधिकृतम् । यथा

विड़ङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् ।

इति । तेनाधिकृतत्वात् पुराणमधुन एवैते गुणा ज्ञेयाः । चरके तु पुराणादिविशेष मनादृत्य गुरुत्वमुक्तम् । चक्रस्तु लघ्विति लघुपाकमिति व्याख्याय विरोधं परिहरति । त्रिदोष-प्रशमनत्वञ्चास्य प्रभावान्मिलितत्रिदोषारब्धज्वरहरतया ज्ञेयम् । पृथग्वातजननन्तु चरकवाग्भटाभ्यामुक्तमतो न विरोधः । त्रिदोषहरत्वे उपपत्तिरपि दर्शिता सुश्रुतेन । यथा तत्तु लघु-त्वात् कषायानुरसत्वाच्च कफघ्नं पैच्छिल्यात् माधुर्य्यात् कषा-यानुरसत्वाच्च वातपित्तघ्नमिति । न च दृष्टकारणत एव त्रिदोषहरत्वोपपत्तौ प्रभावकल्पनमयुक्तमिति वाच्यम् । प्रभाव-मन्तरेण मिलितत्रिदोषारब्धविकारहरणनियमानुपपत्तेः । विष-हरमिति विषान्वयसम्भवत्वेऽपि विषहरत्वमस्य प्रभावात् । अतएवोक्तञ्चरके

विषं विषघ्नमुक्तं यत् तत् प्रभावप्रभावितम् ।

इति । केचिदनयैवानुपपत्त्या वमिहरमिति पठन्ति । तन्न । सुश्रुतेऽपि विषप्रशमनमित्युक्तत्वात् । उष्णखाम्बुविरोधीति उष्णेन खाम्बुना च विरुध्यते । सुश्रुते च उष्णविरोधे उपपत्ति-रपि दर्शिता यथा । तत् सौकुमार्य्याच्च तथैव शैत्याना-

माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः।
माक्षिकं प्रवरं तेषां विशेषाद्भ्रामरं गुरु॥१८॥
माक्षिकं तैलवर्णं स्याद् घृतवर्णन्तु पौत्तिकम्।
क्षौद्रन्तु कपिलं विद्यात् श्वेतं भ्रामरमुच्यते॥१९॥

नौषधीनां रससम्भवाच्च। उष्णे विरुध्येत विशेषतस्तु तथान्तरीक्षेण जलेन चापि। सौकुमार्य्यादिति सुकुमारं हि उष्णे विरुध्यते। नवनीतस्त्यानघृतजलकुसुमवत्। तथैव शैत्यादिति शीतस्य स्वभावत एव उष्णविरोधात्। नानौषधीनां रससम्भवाच्चेति विरुद्धरसवीर्य्यनानाद्रव्यपुष्पस्य रसेन द्रवेण सम्भवादुत्पत्तेरित्यर्थः। खाम्बुना शीतेनापि मधुनो विरोधित्वे द्रव्यस्वभावमात्रं हेतुः। उष्णविरोधश्चोष्णस्पर्शैरेव नोष्णवीर्य्यैस्तेनोष्णवीर्य्यत्रिकटुवादिना मधु न विरुध्यते। एतच्चोष्णविरोधित्वमार्घ्यं मधु विहाय बोध्यम्। तस्य विषान्वयत्वासम्भवात्। अतएवोक्तं भोजे। मधून्युष्णैर्विरुध्यन्तेऽन्यत्रार्घ्यादिति॥ १७॥

यद्यपि सुश्रुतेऽष्टविधं मधूक्तम्। यथा।

पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः॥

इति। तत्रापि मधुनश्चतुर्विधत्वमेव सर्वजनप्रसिद्धमिति कृत्वा चरकवचनमुपन्यस्यति। पिङ्गला मक्षिका महत्यः पुत्तिकास्तद्भवं पौत्तिकम्। भ्रामराः प्रसिद्धाः। मक्षिका एव स्वल्पाः पिङ्गलाः क्षुद्रास्तद्भवं क्षौद्रम्। तद्विधा एवास्वल्पा मक्षिकास्तद्भवं माक्षिकम्॥ १८॥

माक्षिकादिज्ञानार्थं वर्णविशेषानाह माक्षिकमिति॥ १९॥

बृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ।
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ।
दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥ २० ॥
तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून्॥२१
उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ।
अपाकादनवस्थानान्न विरुध्येत पूर्ववत् ॥ २२ ॥

इत्यैक्षवादिवर्गः ।

तस्यैव मधुनोऽवस्थाविशेषेण गुणभेदमाह बृंहणीयमिति । पक्वमित्यग्निसम्पर्कादेव मधु गृह्णन्ति । अन्ये तु मधुनः पाको नास्तीति कृत्वा मध्वाधारस्यैव भूरिकालेन स्वयं सुसञ्जातत्वं पक्वत्वं स्वल्पकालावस्थानाच्चामत्वं वदन्ति ॥ २० ॥

मधुनो योगवाहितामाह तदिति । अत्र केचित् नानाद्रव्यात्मकत्वाच्च योगवाहिपरं मध्विति पठन्ति । तन्मतेऽपीयमेवोपपत्तिः । प्रभावसहिता मधुनो योगवाहित्वे हेतुः । प्रभावात्तु नानाद्रव्यात्मकत्वेऽपि मद्यादीनां न योगवाहित्वम् ॥ योगवाहितया च येन येन वाजीकरणरसायनदोषहरणादिना युज्यते तस्य तस्यैव कर्म करोतीति भावः ॥ ११ ॥

इदानीं विषयविशेषे मधुन उष्णेनाप्यविरोधमाह उष्णेनेति । वमनेष्विति अचिरावस्थायिभेषजोपलक्षणम् । तेन वस्तावप्यविरोधो ज्ञेयः । विरेचने तु चिरावस्थानाद्विरुध्यत एव । पूर्ववदिति सौकुमार्य्यादिहेतुः । पूर्वस्मादिव नात्र विरोध इत्यर्थः ॥ २२ ॥

इत्यैक्षवादिवर्गः ।

---

सर्वं पित्तकरं मद्यमम्लं दीपनपाचनम्।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम्॥
पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्।
विकासि सृष्टविण्मूत्रं निद्राभावप्रसक्तिनुत्॥१॥
स्तन्यरक्तक्षयहिता सुरा दीपनबृंहणी।
कार्श्यार्शोग्रहणीदोषमूत्राघातानिलापहा॥२॥
कासार्शोग्रहणीदोषप्रतिश्यायविनाशिनी।
श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा॥ ३॥

इदानीं मधुगुड़योनित्वात् तथा मधुशब्दाभिधेयत्वाच्च मद्यस्य तदनन्तरं मद्यवर्गमाह सर्वमिति। यद्यपि मार्द्वीकमाध्वीकादिमद्यं साचादप्रतीयमानाम्लरसं तथापि अम्लकार्य्यदन्तहर्षमुखस्रावकारित्वेन अम्लानुरसत्वेन चाम्लत्वमिह ज्ञेयम्। यत्तु वाग्भटे

सस्वादुतिक्तकटुकमम्लपाकरसं सरम्।
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु॥

इति। पञ्चरसत्वमुक्तम्। तन्मतेऽप्यम्लानुरसता इतररसानां ज्ञेया। उक्तं हि

सर्वेषां मद्यमम्लानामुपर्य्युपरि वर्त्तते।

इति। इन्द्रियबोधनमिति इन्द्रियपाटवकरमिति डल्वनः। निद्राभावप्रसक्तिनुदिति निद्राया अभावं नाशं तथा निद्राया अतिप्रसक्तिञ्च नुदति। अतएवोक्तमन्यत्र

नष्टनिद्रातिनिद्राभ्यो हितं पित्तासृदूषणम्। इति॥ १॥

सुरागुणमाह स्तन्येति। सुराऽत्र लोहितवर्णा॥ २॥

छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्दिनी ।
प्रसन्ना गुल्मवातार्शोविबन्धानाहनाशिनी ॥४॥
पित्तलाल्पकफा रूक्षा यवैर्वातप्रकोपणी ।
विष्टम्भिनी सुरा गुर्वी श्लेष्मला तु मधूलिका ॥५॥
रूक्षा नातिकफा वृष्या पाचनी वल्कली सुरा ॥६॥
कोहलो भेद्यवृष्यश्च त्रिदोषो वदनप्रियः ॥ ७ ॥
ग्राह्युष्णो जगलः प्रोक्तो रूक्षस्तृट्कफशोथनुत् ॥८॥

कातीलीति प्रसिद्धायाः श्वेतसुराया गुणमाह कासार्श इति ॥ ३ ॥

प्रसन्नागुणमाह छर्दीति । प्रसन्ना मद्यस्योपरि अच्छो भागः । अन्ये तु मद्यमेव भेषजयोगात् प्रसन्नं प्रसन्नामाहुः ॥ ४ ॥

यवगोधूमकृतसुरयोः क्रमाद्गुणमाह पित्तलेति । गुर्वीत्यन्तो यवसुरागुणः । यवैरित्यनन्तरं कृतेति शेषः । श्लेष्मला तु मधूलिकेति गोधूमसुरागुणः । मधूलकः स्वल्पगोधूमः । तत्कृतक्लिन्नभागा सुरा मधूलिका । अन्ये तु मधूलकं मर्कटहस्ततृणं तत्फलक्लिन्नकृता मधूलिकेत्याहुः । जेज्जड़स्तु मधूलकपुष्पसम्भवं मद्यं मधूलिकामाह ॥ ५ ॥

वल्कलीति प्रसिद्धसुरागुणमाह रूक्षेति । विभीतककृता सुरा वल्कली । अतएव केचिद्वल्कलीस्थाने आक्षिकीति पठन्ति । अक्षो विभीतकः ॥ ६ ॥

कोहलाख्यमद्यगुणमाह कोहल इति । यवशक्तुकिण्वकृतं मद्यं कोहलः । अन्ये तु पौण्ड्रदेशप्रसिद्धां सुरां काञ्चिमानिकामाहुः ॥ ७ ॥

हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषनुत्।
वक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः॥ ९ ॥
शीधुः पित्तानिलहरः श्लेष्मस्नेहविकारहा।
मेदःशोषोदरार्शोघ्नो वल्यः पक्वरसो मतः॥१०॥
जरणीयो विवन्धघ्नः स्वरवर्णविशोधनः।
लेखनः शीतरसिको हितः शोफोदरार्शसाम्॥११॥
गौड़ः शीधुः कषायः स्यात् स्वादुः पाचनदीपनः१२
शार्करो मधुरो हृद्यो दीपनो वस्तिशोधनः।
वातघ्नो मधुरः पाके रुच्य इन्द्रियवोधनः॥१३॥
शीधुर्मधूकपुष्पोत्थो विदाह्यग्निवलप्रदः।
रूक्षः कषायः कफहा वातपित्तप्रकोपणः॥१४॥

जगलो भक्तकिखकिक्षकृता सुरा तस्या गुणमाह ग्राहीति॥ ८ ॥

भेदकशब्दव्यवह्रियमाणवक्कसगुणमाह हृद्य इति॥ ९ ॥

पक्वेक्षुरसकृतशीधुगुणमाह शीधुरिति। पक्वरसः क्वथितेक्षुरसेषु यः क्रियते॥ १० ॥

अपक्वेक्षुरसकृतशीधुगुणमाह जरणीय इति। शीतरसिकोऽपक्वेक्षुरसकृतः॥ ११ ॥

गुड़कृतशीधुगुणमाह गौड़ इति॥ १२ ॥

शर्कराकृतशीधुगुणमाह शार्कर इति। इन्द्रियवोधन इन्द्रियपाटवजनकः॥ १३ ॥

अयन्तु न गुड़योनिः॥ १४ ॥

जाम्बवो बद्धनिष्यन्दस्तुवरो वातकोपनः ॥१५॥
तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत्।
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥१६॥
तीक्ष्णः कषायो मदकृद् दुर्नामकफगुल्मनुत्।
क्रिमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः ॥ १७ ॥
निर्दिशेद् द्रव्यतश्चान्यान् कन्दमूलफलासवान्॥१८
नवं मद्यमभिष्यन्दि दोषकृज्जीर्णमन्यथा ॥ १९ ॥

जम्बुफलरसगुड़ादिकृतशीधुगुणानाह जाम्बव इति। बद्ध-निष्यन्दो बद्धमूत्रः। तुवर इति कषायः। तीवर इति पाठे तीवर इति जाम्बवविशेषणं वदन्ति। जम्बुफलरसतुवरीक्वाथ-गुड़ादिकृतः शीधुरित्यर्थः ॥ १५ ॥

इदानीं पृथङ्मधुगुड़पिष्टयोनिमद्यान्यभिधाय मस्त्वादि-योनिमेलकनिष्पाद्यं किञ्चिदौषधयुक्तं मद्यमासवसंज्ञकं निर्दि-शन्नाह तीक्ष्ण इति। सुरा पैष्टी सैवं यत्र तोयकार्य्यं करोति स सुरासवः ॥ १६ ॥

मैरेयगुणमाह तीक्ष्ण इति।

आसवस्य सुरायाश्च द्वयोरेकत्र भाजने।
सन्धानं तं विजानीयात् मैरेयमुभयाश्रयमिति ॥१७॥

अनुक्तासवगुणज्ञानार्थमाह निर्दिशेदिति। द्रव्यत इति। द्रव्यगुणतो वीक्ष्य कन्दाद्युपलक्षणम्। तेन काण्डत्वक्पल्लवा अपि ग्राह्याः ॥ १८ ॥

मद्यस्याल्पकालत्वादिना अपरिणतस्य तथा चिरकालत्वा-दिना परिणतस्य दोषगुणानाह नवमिति। जीर्णमिति कालेन परिपक्वम् ॥ १९ ॥

अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः ॥ २० ॥
बहुदोषहरश्चैव रोगाणां शमनश्च सः ।
दीपनः कफवातघ्नः सरः पित्ताविरोधनः ॥
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ॥२१॥
अरिष्टासवशीधूनां गुणान् कर्माणि चादिशेत् ।
बुद्धा यथा स्वं संस्कारमवेक्ष्य कुशलो भिषक् ॥२२॥
सान्द्रं विदाहि दुर्गन्धि विरसं क्रिमिलं गुरु ।
अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥
अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत् ।
तद्वर्ज्यं [illegible] किञ्चिच्छेषञ्च यद्भवेत् ॥२३॥

अरिष्टगुणमाह अरिष्ट इति । अरिष्टशब्देन इक्षुविकारसहिताभयाचित्रकदन्तीपिप्पल्यादिभूरिभेषज-क्वाथ्यादिसंस्कारवत् मद्यमभिधीयते । द्रव्यसंयोग इति अभयाचित्रकादिद्रव्यसंयोगः । संस्कारस्तु भेषजक्वथनभाजनसंस्कारयवराशिस्थापनादिः ॥२०॥

अधिकगुणत्वमेवाह बह्विति । बहुदोषहर इत्यस्य भाष्यं कफवातघ्नः पित्ताविरोधेन इति । नञ् ईषदर्थे । रोगाणां शमन इत्यस्य तु भाष्यं शूलाध्मानेत्यादि । तेन न पौनरुक्त्यम् । किंवा शेषार्थमेतद्वचनमित्याहुः । दोषाणां शमन इति पाठेऽपि दोषशब्दो रोगवचन एवेति ज्ञेयम् ॥ २१ ॥

अरिष्टप्रसङ्गेनासवशीधूनामपि बहुप्रपञ्चेनेहानुक्तानां गुणज्ञानार्थमाह अरिष्टेति । संस्कारमवेक्ष्येति संस्कारद्रव्यगुणान् बुद्धा ॥ २२ ॥

यादृशं मद्यं वर्ज्यं तदाह सान्द्रमिति । तरुणमिति मन्द-

चिरस्थितं जातरसं दीपनं कफवातजित्।
रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥२४॥
शुक्तं बलाशपित्तास्रक्क्लेदि वातानुलोमनम्।
भृशोष्णतीक्ष्णरूक्षाम्लं हृद्यं रुचिकरं सरम्।
दीपनं शिशिरं स्पर्शे पाण्डुहृद्क्रिमिनाशनम्॥२५
तद्वत्तदासुतं सर्वं रोचनन्तु विशेषतः॥ २६ ॥
गौड़ानि रसशुक्तानि मधुशुक्तानि यानि च।

जातम्। एतच्चोक्तमपि समुदितदोषाभिधानप्रस्तावात् पुनरुच्यते॥ २३ ॥

सेव्यं यन्मद्यं तदाह चिरस्थितमिति॥ २४॥

आसुतत्वसामान्यात् शुक्तादिगुणकर्मणी दर्शयन्नाह शुक्तमिति। शुक्तलक्षणं यथा।

यन्मस्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम्।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते॥

इति। अत्रैव गुड़ादिमानं यथा।

गुड़माक्षिकधान्याम्लमस्तु च द्विगुणं क्रमात्।
शुक्तसिद्धार्थमावाप्यं प्रायशः कटुकञ्च तत्॥ इति॥२५॥

शुक्तप्रक्षिप्तकन्दादिषु शुक्तगुणानभिदिशति। तदासुतमिति। शुक्तसन्धानक्षिप्तमार्द्रककरीरादि तद्वदिति शुक्तसमानगुणम्॥ २६ ॥

शुक्तस्य योनिभेदेन गुणमाह गौड़ानीति। गौड़ानि गुड़प्रकृतिशुक्तानि। रसशुक्तानि इक्षुरसकृतशुक्तानि। एतच्छुक्तत्रयज्ञानार्थंपरि भाषा यथा।

यथापूर्वं गुरुतराण्यभिष्यन्दकराणि च ॥ २७ ॥
काञ्जिकं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम् ।
श्रमक्लमहरं रुच्यं दीपनं वस्तिशूलनुत् ॥
शस्तमास्थापने हृद्यं लघुवातकफापहम् ।
गण्डूषधारणाद्वक्त्रमलदौर्गन्ध्यशोषजित् ॥ २८ ॥
एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ।
क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिवर्हणे ॥ २९ ॥
मूत्रं गोजाविमहिषगजाश्वोष्ट्रखरोद्भवम् ।
पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥

गुड़ाम्बुना सतैलेन सन्धानं संस्कृतं तु यत् ।
कन्दशाकफलैर्युक्तं गुड़शुक्तं तदुच्यते ॥

इति । गुड़शुक्तवदिक्षुरसशुक्तं ज्ञेयम् ।

जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् ।
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ।
त्र्यहेण तज्जातरसं मधुशुक्तमुदाहृतम् ॥ इति ॥ २७ ॥

काञ्जिकगुणमाह काञ्जिकमिति । पित्तकरस्यापि काञ्जिकस्य दाहशमकत्वं यत् सुश्रुतेनोक्तं तत् स्पर्शेनैव ज्ञेयम् । अन्ये तु यथा तक्रं कण्ठे कफं करोति उदरे तु हन्ति प्रभावात् तद्वदत्रापि पित्तकरस्यापि काञ्जिकस्य दाहहरत्वं प्रभावेणैव ज्ञेयमित्याहुः ॥ २८ ॥

सौवीरतुषोदकयोर्गुणमाह एभिरिति । वितुषयवकृतं सौवीरं सतुषयवकृतं तुषोदकम् ॥ २९ ॥

द्रव्यपारिशेष्यान्मूत्राण्याह मूत्रमिति । अत्र व्यवहारसिद्ध-

क्रिमिशोफोदरानाहशूलपाण्डुकफानिलान्।
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु॥
दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम्॥ ३०॥
गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम्।
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातनुत्॥
गुल्मशूलोदरानाहविरेकास्थापनादिषु।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत्॥ ३१॥
दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु।
आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम्॥३२॥
कटु तिक्तान्वितं छागमीषन्मारुतकोपनम्॥३३॥
सक्षारतिक्तकटुकमुष्णं वातघ्नमाविकम्॥ ३४॥
आश्वं कफहरं मूत्रं वातचेतोविकारनुत्॥३५॥
तीक्ष्णं क्षारे किलासे च नागमूत्रं प्रयोजयेत्॥३६

त्वात् लोके वेदे च धेनुमूत्रमेव गृह्यते न तु बलीवर्द्दस्य। अन्ये तु शुक्रसम्बन्धेन गुरुत्वात् पुङ्गवमूत्रं न ग्राह्यमित्याहुः। तन्न। शुक्रसम्बन्धस्य स्त्रीष्वपि प्रशक्तत्वात्। अपरे तु स्त्रीमूत्रं लघुत्वात् ग्राह्यमित्याहुः। तदप्ययुक्तं येन सेकादौ वाते च मूत्रस्य गौरवमप्युपयुक्तं तस्माद्यथोक्तमेव श्रेय इति॥ ३०॥

सामान्यगुणमभिधाय तेषां विशिष्टगुणमाह गोमूत्रमिति। अविशिष्टमूत्रप्रयोगे गव्यमूत्रमेव ग्राह्यमित्यर्थः॥ ३१॥

अविशुद्धिर्वमनादीनाम्॥ ३२॥

चेतोविकार उन्मादापस्मारौ॥ ३५॥

दीपनं गार्दभं मूत्रं गरचेतोविकारनुत् ॥ ३७ ॥
अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम् ॥३८॥
इति मद्यादिवर्गः ।

---

विधिना कृत आहारः प्रीणनो धातुपोषकः ।
स्मृत्यायुःपुष्टिवर्णौजःसत्त्वोत्साहविवर्द्धनः ॥ १ ॥
ओदनः क्षालितः स्विन्नः प्रस्रुतो विषदो लघुः ।

क्षार इति क्षारापाके ॥ ३६ ॥

कारभमित्यौष्ट्रम् । मानुषमूत्रमबहुविषयतया उद्देशेनानुक्तमपि विषहन्तृतया अशून्यतार्थं पठ्यते ॥ ३८ ॥

इति मद्यादिवर्गः ।

---

इदानीमुक्तानामेव धान्यादीनां संस्कारविशेषाहितं गुणमभिधातुं कृतान्नवर्ग आरभ्यते । कृतं करणनिष्पादितं यदन्नपेयामण्डादि । ते च पेयादीनां गुणाः संस्कारसंयोगादिजाः केचित् प्रकृता अपि । न च वाच्यं पेयादीनामेव गुणेन बाधितत्वात् शूकधान्यादीनां पृथग्गुणकथनमयुक्तमिति । यतः पेयादयो हि प्रकृतिगुणानुविधायिनः सन्तो गुणमावहन्ति तेन यः कृतान्नस्य गुण उच्यते स यदि रक्तशाल्यादिप्रकृतावपि स्यात् तदा बलवान् स्यात् अथ विपरीतगुणः स्यात् तदा कृतान्नगुणस्याल्पत्वं स्यादिति एषोऽर्थः प्रागेव प्रपञ्चित इति नेहोच्यते । अत्राहारसामान्यगुणमाह विधिनेत्यादि । विधिनेति वक्ष्यमाणविधिना ॥ १ ॥

भृष्टतण्डुलजोऽत्यर्थमन्यथा स्यात् गुरुश्च सः ॥२॥
मण्डस्तु भूरिदोषघ्नो दीपनोऽनिलनाशनः ।
ज्वरहा परमो बल्यः स्वेदनो मार्गशोधनः ॥३॥
लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः ।
वातानुलोमनो हृद्यः पिप्पलीनागरान्वितः ॥४॥

आहारगुणमभिधाय ओदनस्य प्रायेण सर्वजनोपयोज्यत्वात् प्रथमं तद्गुणमाह ओदन इति। चालित इति प्रचालिततण्डुलकृतः। स्विन्न इत्युत्स्विन्नधान्यतण्डुलकृतः। किं वा सम्यक् स्विन्नत्वेन मृदुभूतः प्रस्रुत इति प्रस्रावितद्रवभागः। विषद इति स्वभावेन। तथा कण्डनेन च शुक्लं यत्तण्डुलं तत्कृतः एवम्भूत ओदनो लघुर्भवति। भृष्टतण्डुलजस्तु अत्यर्थं लघुः। अन्यथा इति चालितादिविपर्य्ययो गुरुर्भवतीत्यर्थः ॥ २ ॥

मण्डगुणमाह मण्ड इति। मार्गशोधन इति स्रोतःशुद्धिकरः ॥ ३ ॥

अत्र पाचनत्वं मण्डस्य दोषशेषं विना नोपपद्यते। सम्यक् शुद्धौ च दोषशेषो नोपपद्यते इति विरोधं पश्यन् अकारप्रश्लेषादविशुद्धानां पाचन इति कश्चिदाह। तन्न चरकविरोधात्। तत्र हि क्षुत्पिपासापहः पथ्यः शुद्धानान्तु मलापह इत्युक्तम्। न च तत्रापि शुद्धानां मलापह इत्यनुपपत्त्या शुद्धानामित्यस्य ईषच्छुद्धानामित्यर्थो व्याख्येय इति वाच्यम्। सम्यक् शुद्धानामपि घृतभाण्डावलेपन्यायेन कोष्ठोपलेपकदोषापहत्वेन मलापहत्वोपपत्तेः। तस्मात् सुश्रुतेऽपि यत् पाचनत्वमुक्तं लाजमण्डस्य तत् सति दोषशेषे इति ज्ञेयम्। सम्यक् शुद्धौ च पथ्यत्वदीप-

पेया स्वेदाग्निजननी वातवर्च्चोऽनुलोमनी।
क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥ ५ ॥
विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता।
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥ ६ ॥
यवागूर्ज्वरतृष्णाघ्नी लघ्वीबस्तिविशोधनी ॥ ७ ॥
सिक्थकैरहितो मण्डः पेया सिक्थसमन्विता।

नत्वाभ्यामिवास्योपयोगः। अपि च। मण्डोऽप्यतिद्रवा पेयैव। सा च ईषद्विशुद्धे निषिद्धा। यथा।

कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके।
तर्पणादिक्रमः कार्य्यः पेयाभिष्यन्दयेद्धितान् ॥

तेनाकारप्रश्लेषो न युक्त इति ॥ ४ ॥

द्विधा हि यवागूः पेयाविलेपीभेदात्। तत्र पेयागुणमाह पेयेति ॥ ५ ॥

विलेपीगुणमाह विलेपीति ॥ ६ ॥

विशिष्टयवागूगुणमभिधाय यवागूसामान्यगुणमाह यवागूरिति ॥ ७ ॥

उक्तानामेव मण्डादीनां लक्षणमाह सिक्थकैरिति। तत्र द्रवसिक्थसमन्विता यवागूरिति यवागूसामान्यलक्षणम्। सा च द्विविधा पेयाविलेपीभेदात्। मण्डस्तु यवाग्वा एवोपरितनो भागो न तु पृथङ्मण्डः साध्यते। आयुर्वेदशास्त्रे अदर्शितत्वात्। यस्तु क्वचिन्मण्डगुणो मण्डोपयोगो वा श्रूयते सोऽप्येवंरूप एव बोध्यः। ननु मण्डो हि चतुर्दशगुणजलसाध्यः यवागूस्तु षड्‌गुणसाध्या। यदुक्तम्।

अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे।

**यवागूर्बहुसिक्था स्याद् विलेपी विरलद्रवा ॥८॥**
**मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।**
**यथापूर्वं शिरस्तत्र मण्डो वातानुलोमनः ॥ ९ ॥**

मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि ॥

इति । तत्कथमुच्यते यवाग्वा एवोपरितनो भागो मण्ड इति । नैवं तत्र यवागूशब्देन पेया विवक्षिता । अतएव पेयायाः पृथग् जलं नोक्तम् । द्रवसिक्थसमन्वितत्वं हि यवागूसामान्यलक्षणम् । तेन चतुर्दशगुणसाध्यस्यापि मण्डस्य सिक्थसमन्वितावस्थायां यवागूत्वमेव । तेन सूक्तं यवाग्वा उपरितनो भागो मण्ड इति । पेया इति पातुं योग्या एतेनान्वर्थसंज्ञया बहुद्रवत्वमल्पसिक्थत्वञ्च बोध्यम् । तेन सिक्थसमन्विता यवागूः पेयेति । पेयालक्षणे बहुद्रवत्वमल्पसिक्थत्वञ्च लक्षणतया बोध्यम् । तथा विरलद्रवा बहुसिक्था च यवागूर्विलेपीति विलेपीलक्षणमवगन्तव्यम् । विरलद्रवा अल्पद्रवेत्यर्थः । तेन पेयाविलेपी व्यतिरेकेण यवागूः पृथङ् नास्तीत्याहुः । एतेन चरकवाग्भटसुश्रुतैरपि यवागूगुणः पृथङ्नोक्तः । यत्तु माधवचक्राभ्यां पेयाविलेपीगुणं पठित्वा यवागूगुणः पृथक् पठितः, तत्सामान्यगुणाभिप्रायेण सामान्यक्षीरगुणवदिति ज्ञेयम् ॥ ८ ॥

उक्तानामेव मण्डादीनामापेक्षिकं लाघवमाह मण्डेति । यथापूर्वं लाघवमिति तेनौदनमपेक्ष्य लघ्वी विलेपी ततोऽपि पेया पेयातो मण्डो लघुतर इत्यर्थः । यद्यपि वातानुलोमनत्वं मण्डस्य पूर्वमुक्तं तथापि सम्पूर्णश्लोकानुरोधात् अत्र पुनः पठति । इदं हि वचनं वाग्भटस्य । अत्र यवाग्वादिसाधनपरिभाषाश्च सव्याख्याना अस्मदीयचरकतत्त्वदीपिकायामनुसन्धेया विस्तरभयाच्चेह नोक्ताः ॥ ९ ॥

पायसः कफकृद्बल्यो विष्टम्भी मेदुरो गुरुः ॥१०॥
कृशरा पित्तकफदा बल्या मारुतनाशिनी ॥११॥
अन्नं मांसादिभिः सार्द्धं सिद्धं स्याद् गुरु बृंहणम्१२
रसौदनो ज्वरहरो बल्यो ग्राह्यनिलापहः ॥१३॥
घोलभक्तं श्रमार्शोघ्नं रुच्यं तर्पणदीपनम् ॥१४॥
सद्योऽन्नं वारिणा धौतं शीघ्रपाकं बलप्रदम्।
शीतलं मधुरं रुच्यं श्रमघ्नं तर्पणं परम् ॥ १५ ॥
पानीयभक्तं व्युषितं मेदःस्वेदकफप्रदम्।
त्रिदोषकोपनं रुच्यं मलकृत् मूत्रलं परम् ॥१६॥
सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघु हितः ॥१७॥

विलेपीभेदस्य पायसस्य गुणमाह पायस इति। क्षीरकृता हि विलेपी पायसः ॥ १० ॥

कृशरागुणमाह कृशरेति। कृशरा तु तिलतण्डुलमाषकृता यवागूः। उक्तं हि

तिलतण्डुलमाषैस्तु कृशरा त्रिशयेति च ॥ ११ ॥

अन्नस्य द्रव्यविशेषसंयोगाद् गुणविशेषं दर्शयन्नाह अन्नमिति ॥ १२ ॥

त्रिदोषकोपनमित्युक्तापि कफप्रदमिति वचनं विशेषार्थम् ॥ १६ ॥

अन्नानन्तरं व्यञ्जनप्रधानं सूपमाह सुस्विन्न इति। ईषद्भृष्ट इति सम्बन्धः। ये तु माससूप इति पठन्ति ते मुद्गादिसूपानां प्रकृतिलाघवेनैव लघुत्वं लब्धं तेन गुरोरपि माषस्य सुस्विन्नत्वादिना लघुत्वमुच्यत इत्याहुः ॥ १७ ॥

स्विन्नं निष्पीड़ितं शाकं स्नेहसंस्कारितं हितम्।
अस्विन्नं स्नेहरहितमपीड़ितमतोऽन्यथा ॥ १८ ॥
स्विन्नं मांसं कटु स्नेहगोरसाम्लफलैः सह।
वृंहणं रोचनं वल्यं खालिष्कस्तु सदा गुरुः ॥१९॥
तदेव गोरसादानं सुरभि द्रव्यसंस्कृतम्।
विद्यात् पित्तकफोत्क्लेदि वलमांसाग्निवर्द्धनम्॥२०॥
परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु।
रोचनं वलमेधाग्निमांसौजःशुक्रवर्द्धनम् ॥ २१ ॥
तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति भाषितम्।
परिशुष्कगुणैर्युक्तं ज्ञेयं पथ्यतमं गुरु ॥ २२ ॥

सूचिकटाहन्यायेन व्यञ्जनप्रधानमांसात् पूर्वं शाकमाह स्विन्नमिति। अतः पूर्वोक्तात्। अन्यथेति अहितमित्यर्थः ॥१८॥

मांसव्यञ्जनानां विशेषाणां गुणमाह स्विन्नमिति। खालिष्को वक्ष्यमाणपरिशुष्काख्यमांसव्यञ्जनभेदः। अन्ये तु वेशवाराख्यमांसव्यञ्जनभेद इत्याहुः ॥ १९ ॥

तस्यैव मांसस्य प्रदिग्धत्वेन प्रसिद्धस्य गुणमाह तदिति। आदानं घनद्रवावापः गोरस एव आदानं यस्य तद्गोरसादानम् ॥ २० ॥

तस्यैव मांसस्य परिशुष्कत्वेन प्रसिद्धस्य गुणमाह परिशुष्कमिति। परिशुष्कप्रदिग्धयोर्लक्षणं यथा।

सिक्थं बहु घृते घृष्टं मुहुरुष्णाम्बुसेचितम्।
जीरकाद्यैर्युतं मांसं परिशुष्कं तदुच्यते।
तदेव गोरसादानं प्रदिग्धमिति विश्रुतम् ॥ २१ ॥

तदेव शूलिकाप्रोतमङ्गारे परिपाचितम्।
ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरुपाकत: ॥२३॥
मांसं यत्तैलसिद्धं तद्वीर्य्योष्णं पित्तकृद् गुरु।
घृतसिद्धन्तु रुच्यग्निदृष्टिदं पित्तनुल्लघु ॥ २४ ॥
वेशवारो गुरु: स्निग्धो बलोपचयवर्द्धन: ॥ २५ ॥

परिशुष्कस्य शूल्यस्य प्रसङ्गेनाशेषशूल्यानामपि विशेषगुणमाह तदिति। तदेव परिशुष्कमेव उल्लुप्तमिति भाषितम् सूदैरुल्लुप्तमिति संज्ञया परिभाषितम्। कुत इत्याह उल्लुप्तपिष्टत्वादिति। लुप्लृ छेदने इत्यस्माद्भावे क्त:। उत्कर्षेणातिशयेन लुप्तम्। तेन प्रत्यवयवच्छेदनेन पिष्टमिव पिष्टम् उल्लुप्तपिष्टम्। ज्ञेयं पथ्यतमं गुर्वित्यस्य स्थाने केचिद्वह्नेः पक्वमतो लघ्विति पठन्ति। तन्मते अत इति परिशुष्कात् वह्नेः पक्वं यदुल्लुप्तं तल्लघु भवतीत्यर्थ: ॥ २२ ॥

तस्यैव उल्लुप्तस्याङ्गारपाचनादिविशेषेण गुणमाह तदिति। शूलिकाप्रोतमिति लोहादिशलाकारोपितम्। गुरुतरमिति परिशुष्कादगुरोर्गुरुतरं ज्ञेयम्। कुत इत्याह प्रदिग्धं गुरुपाकत इति। यस्मात् स्नेहादिप्रदिग्धं वस्तु पाकतो गुरु भवति। अथवा गुरुपाकत इति परिशुष्कविशेषणम्। तेन गुरुपाकत: परिशुष्कात् शूलपाचितं गुरु ज्ञेयम्। अत्रैव हेतुगर्भविशेषणं प्रदिग्धमिति स्नेहादिप्रदिग्धत्वादित्यर्थ: ॥ २३ ॥

एषां सर्वेषामेव तैलयोगकृतं घृतयोगकृतञ्च गुणविशेषमाह मांसमिति ॥ २४ ॥

वेशवारगुणमाह वेशवार इति। वेशवारलक्षणं यथा।

निरस्थि पिशितं शिष्टं स्विन्नं गुड़घृतान्वितम्।

रसो ज्वरक्षयहरः स्मृत्योजःस्वरवर्द्धनः ।
बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणिनां हितः ॥२६॥
स दाड़िमयुतो वृष्यः संस्कृतो दोषनाशनः ॥२७॥
प्रीणनः सर्वधातूनां विशेषान्मुखशोषिणाम् ।
क्षुत्तृष्णापहरः श्रेष्ठः सोरावः स्वादुशीतलः ॥२८॥
मांसं यदुद्धृतरसं न तत्पुष्टिबलावहम् ।
विष्टम्भि दुर्जरं रूक्षं नीरसं मारुतावहम् ॥२९॥
दग्धमत्स्यो गुरुर्वृष्यो बृंहणः प्राणवर्द्धनः ।
क्षीणशुक्राश्च ये केचित् भग्नजर्जरिताश्च ये ॥
नित्यं स्त्रीसेविनश्चैव क्षीणरेतस एव च ।
दग्धमत्स्यो हितस्तेषां सतैललवणान्वितः ॥३०॥
तस्माद्धीनगुणः किञ्चिद् भृष्टमत्स्य उदाहृतः ॥३१॥

कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥ २५ ॥

मूर्त्तमांसप्रकारमभिधाय द्रवमांसप्रकारमाह रस इति ॥२६॥

तस्यैव मांसरसस्य द्रवसंयोगजं गुणमाह स इति। स इति मांसरसः। संस्कृत इति कटुकादिना ॥ २७ ॥

सोरावगुणमाह प्रीणन इति। सोरावो रसस्योपर्य्यच्छो भागः ॥ २८ ॥

मांसक्काथसारो रसः तेन तत्प्रसङ्गेन तत्क्विष्टभूतमांसगुणमाह मांसमिति ॥ २९ ॥

आमिषत्वसामान्याद् दग्धमत्स्यगुणमाह दग्धमत्स्य इति ॥ ३० ॥

यथाप्रकृतिनिर्देश्यो व्यञ्जनेषु गुणान्वय: ॥३२॥
कफघ्नो दीपनो हृद्य: शुद्धानां व्रणिनामपि ।
ज्ञेय: पथ्यतमश्चापि मुद्गयूष: कृताकृत: ॥ ३३ ॥
स तु दाड़िममृद्वीकायुक्त: स्याद्रागषाड़व: ।
रुचिष्णुर्लघुपाकश्च दोषाणाञ्चाविरोधकृत् ॥३४॥
मसूरमुद्गगोधूमकुलत्थलवणै: कृत: ।
कफपित्ताविरोधी स्याद् वातव्याधौ च शस्यते॥३५
मृद्वीकादाड़िमैर्युक्त: स चाप्युक्तोऽनिलार्दिते ।
रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥३६॥
पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ।
पित्तघ्नौ दीपनौ हृद्यौ क्रिमिकुष्ठज्वरापापहौ॥३७

अनुक्तव्यञ्जनगुणज्ञानार्थमाह यथेति ॥ ३२ ॥

यूषेषु प्रधानत्वात् मुद्गयूषगुणमाह कफघ्न इति । कृताकृत इति लवणादिसंयुत: कृत इत्युच्यते । तद्रहितस्तु अकृत इति । उक्तं हि सुश्रुते ।

अस्नेहलवणं सर्वमकृतं कटुकैर्विना ।
विज्ञेयं लवणस्नेहकटुकै: संस्कृतं कृतम् ॥ ३३ ॥

अस्यैव यूषस्य संयोगविशेषेण नामान्तरमाह स इति ॥३४॥

मसूरादिपञ्चकयूषगुणमाह मसूरेत्यादि ॥ ३५ ॥

अस्यैव मृद्वीकादियोगेन गुणमाह मृद्वीकेत्यादि ॥ ३६ ॥

अत्र यूषस्य सूपयोनित्वाद् मुद्गादिकं त्रिगुणमिच्छन्ति द्विवचनोपादानात् यूषद्वयं ज्ञेयम् ॥ ३७ ॥

हन्ति मूलकयूषस्तु कफमेदोगलामयान् ।
श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ॥३८॥
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ।
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥३९॥
सर्वधान्यकृतस्तद्वद् वृंहणः प्राणवर्द्धनः ॥ ४० ॥
खड़काम्बलिकौ हृद्यौ छर्दिवातकफे हितौ ॥४१॥
बल्यः कफानिलौ हन्ति दाड़िमाम्लोऽग्निदीपनः॥४२

मूलकयूष इति मूलकशुण्ठकयूषः। चन्द्रिकाकारस्तु बाल-मूलयूष इत्याह। जेज्जड़स्तु यद्यपि बालमूलकं त्रिदोषघ्नं तथापि तस्य यूषकरणे श्रुतिर्नास्तीति अयमपि मुद्गादिसहितो ज्ञेय इत्याह ॥ ३८ ॥

सर्वधान्यकृत इति सर्वशमीधान्यकृतः। शूकधान्यकुधान्य-योस्तु अयूषयोनित्वादिह न ग्रहणम् ॥ ४० ॥

खड़काम्बलिकयूषविशेषयोर्गुणमाह खडेति। अत्र खड़ो द्विविधः। सतक्रशमीधान्य एकः। सतक्रशाकश्चापरः। तत्राद्यः सस्ूप्यधान्यान् सस्नेहान् साम्लान् सांग्राहिकान् खड़ानित्युक्त-लक्षणः। सतक्रशाकस्तु।

सतक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः।
सुपक्वः खड़यूषोऽयमयं काम्बलिकोऽपरः।
दध्यम्ललवणस्नेहतिलमाषसमन्वितः॥ इति ॥ ४१ ॥

तत्राम्लसिद्धः काम्बलिक इति। अम्लानां बहुत्वात् येन येनाम्लेन यूषो यं यं गुणं करोति तं तं दर्शयन्नाह बल्य इति ॥ ४२ ॥

धान्याम्लो दीपनो हृद्यः पित्तकृद्वातनाशनः ॥४३॥
दध्यम्लः श्लेष्मलो बल्यः स्निग्धो वातहरो गुरुः॥४४
तक्राम्लः पित्तकृद्बल्यो विषरक्तप्रदूषणः ॥ ४५ ॥
अथ गोरसधान्याम्लफलाम्लैरन्वितञ्च यत्।
यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसम् ॥ ४६ ॥
तिलपिण्याकविकृतिः शुष्कशाकं विरूढ़कम्।
सिण्डाकी च गुरूणि स्युः कफपित्तहराणि च॥४७
रागषाड़वयोगास्तु छर्दिमूर्च्छातृषापहाः।

दाड़िमेनाम्लीक्रियते यो यूषः स दाड़िमाम्लः। एवं दध्यम्लधान्याम्लादिकञ्च व्याख्येयम् ॥ ४५ ॥

उक्तयोर्यूषरसयोरन्यान्तरसंयोगेन तथा संस्कृतासंस्कृतयोरपि गुरुलाघवं दर्शयन्नाह अथेति। अत्र रसमिति नपुंसकनिर्देशात् सामान्येन यूषरसयोरुभयोरपि ग्रहणम्। यथोत्तरं लघ्विति। तेन गोरसाम्लापेक्षया धान्याम्लान्वितो रसो यूषो वा लघुर्भवतीत्यादि ज्ञेयम्। तथा संस्कृतापेक्षया असंस्कृतो लघुरित्यर्थः। संस्कृतासंस्कृतं कृताकृतमित्यर्थः ॥ ४६ ॥

कृतान्नप्रसङ्गेन शुष्कशाकविशेषाणां कृतान्नानां गुणमाह तिलेत्यादि। पिष्टतिलपिण्याकविकृतिकृतव्यञ्जनानि तिलपिण्याकविकृतिशब्देनोच्यन्ते। तथा शुष्कशाकं विरूढ़कमपि व्यञ्जनविशेषो देशान्तरप्रसिद्धः। सिण्डाकी च तीरभूमौ प्रसिद्धा ॥ ४७ ॥

रागषाड़वगुणमाह रागेत्यादि। तत्र रागः।

सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः।
जम्बूफलरसैर्युक्तो रागो राजिकया कृतः॥

लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः ॥ ४८ ॥
रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा॥४९
दधि स्याद्गुड़संयुक्तं स्नेहनञ्चानिलापहम् ॥ ५० ॥
द्राक्षाखर्जूरकोलानां गुरु विष्टम्भि पालकम् ।
परूषकाणां चौद्रस्य यच्चेक्षुविकृतिं प्रति ॥ ५१ ॥
तेषां कट्वम्लसंयोगात् पालकानां पृथक् पृथक् ।
द्रव्यं मानञ्च विज्ञाय गुणकर्माणि निर्दिशेत्॥५२॥

षाड़वाः पुनर्मधुराम्ललवणसुगन्धिद्रव्यजा नानाविधाः । अन्ये पुनरेवं वदन्ति यदाह नलः ।

क्वथितन्तु गुड़ोपेतं सहकारफलं नवम् ।
तैलनागरसंयुक्तं विज्ञेयो रागषाड़वः ॥ इति ॥ ४८ ॥

रसालागुणमाह रसालेति । रसाला दधिसंयोगविशेषाः । तथा हि

सचातुर्जातकाजाजि सगुड़ार्द्रकनागरम् ।
रसाला स्याच्छिखरिणी सुघृष्टं सरसं दधि ॥ ४९ ॥

रसालाप्रसङ्गेन सगुड़दधिगुणमाह दधीति ॥ ५० ॥

पालकानामपि कृतान्नभेदत्वात् तद्गुणमाह द्राक्षेति । यच्चेक्षुविकृतिं प्रतीत्यत्र पालकमिति सम्बन्धः ॥ ५१ ॥

उक्तानुक्तपालकगुणज्ञानोपायमाह तेषामिति । न हि नियतं द्रव्यं पालकेषु संयुज्यते । किं तर्हि पुरुषाणामभिलाषात् तथा व्याध्यादिविशेषैश्च तानि तानि द्रव्याणि संयुज्यन्ते । अतस्तत्तत्-कट्वम्लादिद्रव्यसंयोगं बुद्ध्वा तेषां संयुक्तानां द्रव्याणाञ्च मध्ये कस्य कियन्मानमिति बुद्ध्वा उक्तानुक्तपालकानां गुणकर्माणि निर्दिशेदित्यर्थः ॥ ५२ ॥

दुग्धाम्लं शीतलं स्वादु वृष्यं वर्णकरं गुरु।
वातपित्तहरं रुच्यं वृंहणं बलवर्द्धनम् ॥ ५३ ॥
शक्तवः सर्पिषाभ्यक्ताः शीतोदकपरिप्लुताः।
नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते ॥५४॥
मन्थः सद्यो बलकरः पिपासाज्वरनाशनः ॥५५॥
साम्लस्नेहगुड़ो मूत्रकृच्छ्रोदावर्त्तनाशनः।
शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ॥
द्राक्षामधुकसंयुक्तः कफरोगनिवर्हणः।
वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥ ५६ ॥
गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात्।

पालकस्य पेयत्वात् तत्प्रसङ्गेऽन्यदपि पेयमाह दुग्धाम्लमिति ॥ ५३ ॥

मन्थानामपि कृतान्नविशेषत्वात् तद्गुणे वाच्ये प्रथमं तल्लक्षणमाह शक्तव इति। शक्तव इति यवशक्तवो लाजशक्तवश्च। डल्वनोऽपि अविशेषोक्त्या यवादिशक्तवो ग्राह्या इत्याह ॥ ५४ ॥

मन्थगुणमाह मन्थ इति। सद्यो बलकर इत्यापातबलकरः न तूत्तरकालं रौक्ष्यलाघवात् ॥ ५५ ॥

तस्यैव द्रव्यान्तरसंयुक्तस्य गुणमाह साम्लेत्यादि। मूत्रकृच्छ्रोदावर्त्तौ हि पक्वाशयगतौ। पक्वाशयश्च वायोः स्थानम्। तेन मूत्रकृच्छ्रादिहन्तृत्वेन अस्य वातहरत्वमप्युक्तम्। वर्गत्रयेणेति अनन्तरोक्ताम्लादिशर्करादिद्राक्षादिवर्गत्रयेणेत्यर्थः ॥ ५६ ॥

शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥५७॥

इति कृतान्नवर्गः ।

---

वक्ष्याम्यतः परं भक्ष्यान् रसवीर्य्यविपाकतः ॥१॥
पृथुका गुरवः स्निग्धाः कफविष्टम्भकारकाः ।
बल्याः सक्षीरभावात्तु वातघ्ना भिन्नवर्च्चसः ॥२॥
लाजाश्छर्द्यतिसारघ्नाः स्नेहमेदःकफच्छिदः ॥३॥
धानोल्वम्बास्तु लघवः कफमेदोविशोषणाः ॥४॥
शक्तवो वातला रूक्षा बह्ववर्च्चस एव च ॥ ५ ॥
भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ।

शक्तुकृतमन्यप्रसङ्गेन शक्तुपिण्डीशक्तावलेहिकयोर्गुणमाह । गुर्वीति । खरा इति कठिना ॥ ५७ ॥

इति कृतान्नवर्गः ।

---

भक्ष्याणामपि पृथुकादीनां शूकशमीधान्यसम्भवत्वात् । कृतान्नवर्गानन्तरं भक्ष्यवर्ग उच्यते । पृथुका इति चिपिटाः । सक्षीरभावादिति सक्षीरधान्यकृतत्वात् ॥ २ ॥

धाना भृष्टयवाः उल्वम्बा होलाका अत्र मुद्गकलायादिशिम्बा अग्निपक्का होलाका इति डल्वनः ॥ ४ ॥

धानाप्रसङ्गेन यवशक्तुगुणमाह शक्तूनामिति । शक्तूनां रूक्षत्वेऽपि वातलत्वाभिधानं तक्रस्य रूक्षस्यापि वातहारित्वदर्शनात् ॥ ५ ॥

अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥६॥
घृतपूराः प्राणकरा हृद्याः श्लेष्मविवर्द्धनाः।
वातपित्तहरा वृष्या गुरवो मांसशुक्रलाः ॥ ७ ॥
गौड़िका बृंहणा वृष्या गुरवश्चानिलापहाः।
अदाहिनः पित्तसहाः शुक्रलाः कफवर्द्धनाः ॥८॥
मधुशीर्षकसंयावाः पूपा ये ते विशेषतः।
गुरवो बृंहणाश्चैव मोदकास्तु सुदुर्जराः ॥ ९ ॥

भक्ष्याणां योनिविशेषेण गुणविशेषं दर्शयन्नाह भक्ष्या इति। गोधूमपिष्टविकृतोः क्षीरेणालोड्य ये क्रियन्ते ते क्षीरभक्ष्याः। दीपनत्वं पुनरेषां स्ववर्गापेक्षया वातोपहताग्नेः संस्कारप्रभावाद्वा ॥ ६ ॥

घृतपूरस्य गुणमाह घृतपूरा इति। घृतपूरस्य लक्षणं यथा।
मर्दिता समिता क्षीरनारिकेलसितादिभिः।
अवगाह्य घृते पक्वा घृतपूरोऽयमुच्यते ॥
समिता गोधूमचूर्णम् ॥ ७ ॥

गौड़िका इति। गोधूमपिष्टवेष्टना गुड़प्रधानोदरा गौड़िका उच्यन्ते। अदाहिन इति ईषद्विदाहिनः। पित्तसहा इति पित्तं न कोपयतीत्यर्थः ॥ ८ ॥

मधुशीर्षकाः समितावेष्टनाः। पाकाद्घनीभूतमधुना कृतोदरा मधुशीर्षका उच्यन्ते। संयावाः पुनः
समितामम्बुदुग्धेन मर्दयित्वा सुशोभनाम्।
पचेद्घृतोत्तरे खण्डे क्षिपेद्भाण्डे नवे च तत्।
संयावोऽसौ युतश्चूर्णैस्त्वगेलामरिचार्द्रकैः ॥
मोदकाः प्रसिद्धाः ॥ ९ ॥

षट्टकः प्राणरुचिकृद् गुरुः स्वर्य्योऽनिलापहः ॥१०॥
विष्यन्दः स्निग्धमधुरो बल्यो वातापहो गुरुः ॥११
बृंहणा वातपित्तघ्ना बल्या भच्यास्तु सामिताः॥१२
हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥१३॥
मुद्गादिवेशवाराणां पूर्णा विष्टम्भिनो मताः ॥१४

षट्टकगुणमाह षट्टक इति। षट्टकानां बहुत्वेऽप्युदाहरणार्थमेको लिख्यते।

लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितम्।
दाड़िमोवीजसंयुक्तं चन्द्रचूर्णावचूर्णितम्।
षट्टकस्तु प्रमोदाख्यो नलादिभिरुदाहृतम्॥ १० ॥

विष्यन्दस्तु।

आमगोधूमचूर्णन्तु सर्पिः चोरसितान्वितम्।
नातिसान्द्रो नातितनुर्विष्यन्दो नामपाकतः॥

इति। अन्ये तु घृतभृष्टतण्डुलान् विष्यन्दशब्देनाहुः ॥११॥

समिताकृतभच्याणां सामान्यगुणमाह बृंहणा इति॥ समिता गोधूमचूर्णम्। तत्कृताः सामिताः॥ १२ ॥

इदानीं समिताकृतभच्यविशेषगुणमाह हृद्य इति। अत्रापि समिता इत्यनुवर्त्तते। फेनकलचणं यथा।

विमर्द्य विमलां शुक्लां समितां नातिशर्कराम्।
संवेष्टनाय गर्भार्थं खरपाकं घृते पचेत्।
फेनकं फेनसङ्काशं सम्पूर्णशशिसन्निभम्॥

इति। अत्र गर्भार्थमपि समितैव घृते पक्तव्या॥ १३ ॥

समिताकृतभच्याणामेव मुद्गादिकृतगर्भाणां गुणमाह मुद्गेत्यादि। अत्र वेशवारशब्देन मुद्गादीनां स्विन्नपिष्टः कल्क

वेशवारैः सपिशितैः सम्पूर्णा गुरुबृंहणाः ॥१५॥
पाललाः श्लेष्मजननाः शष्कुल्यः कफपित्तलाः ॥१६
शालिपिष्टमया भक्ष्याः कफपित्तप्रकोपणाः ।
विदाहिनो नातिबला गुरवश्च विशेषतः ॥१७॥
वैदला गुरवो भक्ष्याः कषायाः सृष्टमारुताः ।
विष्टम्भिनः पित्तहराः श्लेष्मघ्ना भिन्नवर्च्चसः ॥१८॥
विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः ॥१९॥
हृद्याः सुगन्धिनो भक्ष्या लघवो घृतपाचिताः ।
वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः ॥२०॥
विदाहिनस्तैलकृता गुरवः कटुपाकिनः ।

उच्यते । वेशवाराणामिति करणे षष्ठी । पूर्णा इति कृतगर्भाः ॥ १४ ॥

पिशितवेशवारकृतगर्भाणां गुणमाह वेशवारैरिति । सपिशितैरिति पूर्वोक्तमुद्गादिवेशवारनिरासार्थं विशेषणम् । तेन पिशितवेशवारैरित्यर्थः । अन्ये तु वेशवारं शुण्ठ्यादिकमाहुः । एते मांसिताः ॥ १५ ॥

पललं तिलकल्कस्तत्कृताः पाललाः । शष्कुली तु तिलमुद्गादिचूर्णकृता तैलपक्वा शष्कुलीति लोके ॥ १६ ॥

मुद्गमाषादिविदलकृतानां भक्ष्याणां गुणमाह वैदला इति ॥ १८ ॥

विरूढककृता इति अङ्कुरितमुद्गादिकृताः ॥ १९ ॥

उक्तानुक्तकृतभक्ष्याणां घृते तैले च पाकाद्गुणविशेषमाह हृद्या इति ॥ २० ॥

उष्णा मारुतदृष्टिघ्नाः पित्तलासृक्प्रदूषणाः ॥२१॥
कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ॥२२॥
कुल्माषा वातला रूक्षा गुरवो भिन्नवर्च्चसः ॥२३॥
उदावर्त्तहरो वाट्यः कासपीनसमेहनुत् ॥ २४ ॥
तुषाम्बुवटकं प्रोक्तं वृष्यं रुच्याग्निदीपनम्।
वृष्यं सन्दीपनञ्चैव वटकं तक्रसंस्कृतम् ॥ २५ ॥
यद्द्रव्यं यद्गुणं प्रोक्तं तद्भक्ष्यास्तद्गुणा मताः॥२६
खड़ाः खड़यवाग्वश्च रागषाड़वषट्टकाः।
पालकानि विचित्राणि यूषाश्चानेकयोनयः॥
कट्वम्ललवणाः स्वादुलेहा ये च फलोद्भवाः।
एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः॥

कपालाङ्गारसिद्धानां स्नेहसिद्धेभ्यो लघुत्वं दर्शयन्नाह कपालेत्यादि ॥ २१ ॥

कुल्माषस्य गुणमाह कुल्माषा इति। यवपिष्टमुष्णोदकमृदितमपूपीकृतं कुल्माषमाहुः ॥ २३ ॥

वाट्यो भृष्टयवैः कृतो भक्ष्यः। अन्ये तु दलितयवगोधूमादिकृतं वाट्यमाहुः ॥ २४ ॥

काञ्जिकवटकतक्रवटकयोर्गुणमाह तुषाम्बु इति। तुषाम्बुभावितं तक्रभावितञ्च वटकमित्यर्थः ॥ २५ ॥

अनुक्तभक्ष्यगुणज्ञानार्थमाह यदिति। इदानीं पूर्वोक्तानां व्यवस्थितसंयोगत्वेनोक्तानां गुणानां कारणतो व्यवस्थितसंयोगतया गुणान्तरमूह्यमाह खड़ा इति। खड़ा इति कृतान्नवर्गो-

यथाकारणमासाद्य भोक्तॄणां छन्दतोऽपि वा ।
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत् ॥२७

इति भक्ष्यवर्गः ।

---

अथाहारविधिं वक्ष्ये विस्तरेणानुपूर्वशः ॥ १ ॥
आप्तास्थितमसङ्कीर्णं शुचि कार्य्यं महानसम् ॥२॥
तत्राप्तैः साधितं रम्यमविरुद्धमुपस्कृतम् ।
विषघ्नैरगदैर्मन्त्रैर्भिषगन्नं निवेदयेत् ॥ ३ ॥

दिताः। तैः कृता यवाग्वः खड़यवाग्वः। अनेकयोनय इति विशेषणं खड़ादिषु प्रत्येकमभिसम्बध्यते। अतएवानवस्थितगुणाः खड़ादय इत्यर्थः। लेहा ये च फलोद्भवा इति आम्रलेहादयः। कारणमासाद्येति पुरुषव्याधिदोषभेदादिहेतुं प्राप्य। छन्दत इति पुरुषेच्छाविशेषात् शास्त्रत इति तर्कसहितशास्त्रात् खड़ादिषु युज्यमानं द्रव्यगुणं ज्ञात्वा तर्कतश्च तत्संस्कारादिगुणमुन्नीय खड़ादिगुणमादिशेदित्यर्थः ॥ २७ ॥

इति भक्ष्यवर्गः ।

---

विधिना कृत आहारः प्रीणनो धातुपोषकः ।

इति पूर्वोक्तम्। अत्र कोऽसौ विधिः। कथं वा आहारेण धातूनां पोषणमित्येतदर्थं प्रकरणमारभते अथेति ॥ १ ॥

आहारसिद्धेर्महानससाध्यत्वात् प्रथमं तद्विधिमाह आप्तेत्यादि। आप्तैः साधुलोकैरास्थितमाश्रितम्। असङ्कीर्णमसम्बाधम् ॥ २ ॥

घृतं कार्ष्णायसे देयं पेया देया तु राजते।
फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै दलेषु तु ॥ ४ ॥
परिशुष्कप्रदिग्धानि सौवर्णेषूपकल्पयेत् ॥ ५ ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥ ६ ॥
कट्वराणि खड़ांश्चैव सर्वान् शैलेषु दापयेत् ॥७॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः।
पानीयं पालकं मद्यं मृण्मयेषु प्रदापयेत् ॥८॥
वज्रवैदूर्य्यपात्रेषु रागषाड़वषट्‌कान् ॥ ९ ॥
पुरस्ताद्विमले पात्रे सूपं दद्यात्तु पाचकः।
फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥

आप्तैरिति सूपकारविशेषणम्। रम्यं मनोहरम्। अविरुद्धमिति संयोगादिभिरविरुद्धम्। निवेदयेत् उपढौकयेत् ॥ ३ ॥

किञ्चिद्द्रव्यमाधारप्रभावेण कार्मुकं भवतीत्यत आह। वै दलेष्विति। वैशब्दः पादपूरणे। अन्ये तु वैदलं वंशादिविदलकृतं पात्रमाहुः ॥ ४ ॥

परिशुष्कप्रदिग्धयोरुक्तमेव लक्षणम् ॥ ५ ॥

प्रद्रवाणि मण्डानि ॥ ६ ॥

कट्वरं तक्रम्। अन्ये तु

सौवीराम्लमथात्यम्लकाञ्जिकं कट्वरं विदुः।
सस्नेहदधिजं तक्रमाहुरन्ये तु कट्वरम्॥

शैलेष्विति पाषाणपात्रेषु ॥ ७ ॥

वज्रं हीरकं तस्य पात्रं न सम्भवतीति वज्रयुक्तं पात्रं वज्रपात्रं ज्ञेयम्। अन्ये तु दद्याद्वैदूर्य्यपात्रेष्विति पठन्ति ॥ ९ ॥

तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत्।
प्रद्रवान् रसयूषादीन् सव्ये पार्श्वे प्रदापयेत्॥
सर्वान् गुड़विकारांश्च रागषाडवषट्ककान्।
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः॥१०
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम्।
भोक्तारं विजने रम्ये निःसम्पाते तु भोजयेत्॥११
पूर्वं मधुरमश्नीयात् मध्येऽम्ललवणौ रसौ।
अन्ते शेषान् रसान् वैद्यो भोजनेष्ववचारयेत्॥१२॥
अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत्।
आश्रयं पवनादीनां चतुर्थमवशेषयेत्॥ १३ ॥
भुक्त्वा पादशतं गत्वा वामपार्श्वेन संविशेत्।
शब्दान् रूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान्।

आधारविशेषमभिधाय देशविशेषेण आहारविधिमाह पुरस्तादिति। पुरस्तादग्रत इत्यर्थः। न केवलं पुरस्तात् द्वयोरपि च मध्यत इति द्वयोर्मध्ये एकस्मिन् पार्श्वे दद्यात्। एतेन सर्वत्र दातव्यमिति डल्वनो व्याचष्टे॥ १०॥

निःसम्पाते तु निर्वाते॥ ११॥

इदानीं भोजनस्यानुपूर्वीमाह पूर्वमिति। पूर्वं मधुरमिति वातजयार्थम्। मध्येऽम्ललवणाविति मध्यस्थिताग्न्युत्तेजनार्थम्। शेषानिति कटुतिक्तकषायान् तेन पश्चादूर्द्ध्वस्थश्लेष्मजयार्थं देयाः॥ १२॥

इदानीं द्रवाद्रवरूपस्याहारस्य मात्रामाह अन्नेनेति॥ १३॥

भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति।
भुक्त्वोपविशतस्तुन्दं शयानस्य वपुर्भवेत्॥
आयुश्चङ्क्रममाणस्य मृत्युर्धावति धावतः।
ताम्बूलमुपसेवेत कर्पूराद्यधिवासितम्॥ १४॥
ताम्बूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम्।
विषमूर्च्छामदार्त्तानामपथ्यं शोषिणामपि॥१५॥
अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति।
तद्द्रवैर्भिन्नसङ्घातं स्नेहेन मृदुतां गतम्॥
समानेनावधूतोऽग्निरुदीर्य्यः पवनेन तु।
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये॥१६॥
एवं रसमलायान्नमाशयस्थमधःस्थितः।
पचत्यग्निर्यथा स्थाल्यामोदनायाम्बुतण्डुलम्॥१७॥

भोजनान्तरीयं विधिमाह भुक्तेति॥ १४॥

इदानीमाहारस्याग्निना पाको यथा भवति यथा च पच्यमानमन्नं देहधात्वादिरूपतामापद्यते तदाह अन्नमिति। आदानमाहारनयनं कर्म्म यस्य स तथा। प्रकर्षतीति नयति। द्रवैरिति पानीयादिभिः। भिन्नसङ्घातम् अवयवशैथिल्यमापन्नम्। अवधूत इत्युद्दीपितः। समानेन इत्यनन्तरमविकृतेनेति शेषः। विकृतस्य वायोरग्निवैषम्यकरत्वात्। काले इति बुभुक्षाकाले। सममिति मात्राप्रकृत्यादिभिरुचितम्। सम्यगिति निर्विकारम्॥१६॥

रसमलायेति। रसार्थं मलार्थञ्च पचतीत्यर्थः। आशयस्थमित्यामाशयस्थम्। अधःस्थित इत्यनेन वहिरग्नेर्यथा ऊर्द्ध्वज्व-

अन्नमिष्टं ह्युपहितमिष्टैर्गन्धादिभिः पृथक्।
देहे प्रीणाति गन्धादीन् घ्राणादीनीन्द्रियाणि च॥१८॥
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः।

लनस्वभावतया ऊर्द्धं स्वपाकसामर्थ्यं तथान्तराग्नेरपीति तत्साधर्म्यं दर्शयति। अमुमेवार्थं दृष्टान्तेनोपपादयति यथेत्यादि॥ १७॥

अन्नस्य पाकसम्पाद्यं कार्य्यान्तरमप्याह अन्नमिति। अन्नं कर्त्तृ देहस्थितान् गन्धादीन् प्रीणाति आप्याययति। ननु अन्नेन द्रव्येण द्रव्यपोषणमेव युक्तं न तु गुणपोषणमित्यतोऽन्नं विशिनष्टि गन्धादिभिरुपहितमिति गन्धरूपरसस्पर्शशब्दैर्युक्तमित्यर्थः। एतेन विशेषणद्वारा अन्नगतैर्गन्धादिभिर्देहगतगन्धादिपोषणमिति सिद्धम्। तथा गुणवृद्धिस्तु गुणिवृद्धिं विना न भवतीति पाञ्चभौतिकेन आहारेण देहगतपञ्चभूतपोषणमप्यत एव सिध्यति। इष्टमिति विशेषणेन चान्नस्यानिष्टस्यानिष्टगन्धादिभिर्युक्तस्य न देहव्यवस्थितगन्धादितर्पकत्वमिति दर्शयति। न केवलं गन्धादीनेव प्रीणाति किन्तु घ्राणादीनीन्द्रियाणि च प्रीणाति। आदिशब्दाद्रसनादीनां चतुर्णां ग्रहणम्। पृथगित्यनेन आहारगतो यः पार्थिवो भागः स घ्राणं तद्गतगन्धञ्च देहगन्धं प्रीणाति। एवं आहारगतो जलीयभागो रसनां पुष्णाति। तद्गतो रसः देहरसं पुष्णातीत्यादि व्याख्येयम्॥ १८॥

भौतिकाग्निव्यापारमाह भौमेत्यादि। पार्थिवादिद्रव्येषु हि पाकेन विशिष्टगन्धवर्णादयो जायन्ते। पाकस्तूष्माणं विना न भवतीति पाकान्यथानुपपत्त्या पार्थिवादिद्रव्यव्यवस्थिताः पञ्चोष्माणः स्वीक्रियन्ते। ते तु सौक्ष्म्यात् तत्तद्द्रव्येषु साक्षान्नोपलभ्यन्ते।

**पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन्**
**पचन्ति हि ॥ १६ ॥**
**सप्तभिर्देहधातारो धातवो द्विविधं पुनः ।**

अतस्त एव जाठराग्निसन्धुक्षितबलाः सन्तः स्वान् स्वान् पार्थिवादीन् पञ्चाहारगुणान् पचन्ति । पूर्वस्थितपार्थिवादिगन्धविलक्षणान् पाकेन निवर्त्तयन्तीत्यर्थः । एतदेव चरके विविधाशितपीतीये उक्तम् । विविधाशितं पीतञ्च लीढं खादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानमिति । आहारस्य गुणाः आहारगुणाः । किं वा आहाराश्च गुणाश्च आहारगुणाः । यद्यपि भूताग्निना द्रव्याण्येव पच्यन्ते नतु गुणाः उक्तं हि

जाठरेणाग्निना पूर्वं कृते सङ्घातभेदने ।
पश्चाद् भूताग्नयः पञ्च स्वं स्वं द्रव्यं पचन्ति हि ॥

तथापि द्रव्यपाकवशाद् विशिष्टगन्धादिगुणा जायन्ते इत्यभिप्रायेण गुणानामपि पाक उक्तः । ननु तेजः स्वयमेव पाचकम् तस्य पाचकेनाग्न्यन्तरेण किं क्रियते । ब्रूमः न वयं तेजसि पाचकमग्निं स्वीकुर्म्मः । किन्तु तैजसस्य सुवर्णादिद्रव्यतुल्यस्य पित्तादेः पाकजन्यत्वेन पाचकाग्न्यपेक्षा युक्तैव । एवं वायवीयनाभसद्रव्ययोरप्याश्रित उष्मा वाय्वग्निनाभसाग्निवाच्यो ज्ञेयः ॥ १६ ॥

भौतिकाग्नि-व्यापारमभिधाय-विशिष्ट-धात्वग्निव्यापारमाह सप्तभिरित्यादि । पुनरिति जाठराग्निपाकानन्तरम् । द्विविधमिति द्विप्रकारम् । तदेव प्रकारद्वयमाह किट्टप्रसादवदिति किट्टप्रसादरूपमित्यर्थः । वतिरयमर्हार्थे । किं वा किट्टप्रसादवदिति मतुबन्तं क्रियाविशेषणम् । ननु धात्वग्निवदुपधातुम-

**यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ॥२०॥**
**रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।**

लादिगता अपि पृथगग्नयः किमिति नाना स्वीक्रियन्ते । अथ तत्र पञ्चभूतानि सन्तीति भूताग्निभिरेव तेषां पाक उत्पत्स्यत इति चेत्तर्हि कृतं धात्वग्निभिरपि भूताग्निभिरेव धातुपाकस्याप्युपपत्तेः । नैवं वाह्येषु फलादिषु भूताग्निजन्यो यः पाको दृश्यते स किट्टप्रसादरूपतया नानुभूयते । उपधातुमलादिगतोऽपि पाकस्तादृश एवेति वैलक्षण्याभावादुपधात्वादिषु पृथगग्निस्वीकारोऽकिञ्चित्करः । रसादिधातुपाकस्तु किट्टप्रसादरूपतया विलक्षण इति तत्र पृथगग्निस्वीकारो युक्त एवेति । धातुषु ये भूताग्नयस्ते धात्वग्नेरेव सहाया इति । यद्यपि शुक्रस्य प्रसादरूपतया किट्टवान् पाको नास्ति तथापि बहूनां किट्टवत्त्वात् द्विविधनिर्देशो ज्ञेयः । यथा छत्रिणो गच्छन्तीति ॥ २० ॥

तत्र पाकजन्यैः प्रसादांशैर्येन क्रमेण ये ये जन्यन्ते तानाह रसादिति ॥ प्रसादज इत्यस्य लिङ्गविपरिणामेन रक्तमित्यादिषु सर्वत्र सम्बन्धः । प्रसादजश्च सारभागः । तेन रसाद्रक्तं प्रसादजम् । ततो रक्तान्मांसं प्रसादजम् । मांसाच्च मेदः प्रसादजमित्यादि योज्यम् । रसाद्रक्तं प्रसादजमिति रसात् पाकेन जायते यः प्रसादांशस्तस्माद्रक्तं जायते । एवं रक्तात् पाकेन जायते यः प्रसादांशस्तस्माच्च मांसं जायत इत्यादि व्याख्येयम् । जनिश्चायं पोषण एव वर्त्तते नापूर्वोत्पादे । यतो रक्तादयो गर्भात् प्रभृत्येव उत्पन्ना रसादिभिः पोष्यन्ते । अन्ये तु गर्भप्रसादजमिति पठित्वा गर्भप्रसादजमिति समस्तपदेन ओज आचक्षते । अस्मिंस्तु पक्षे प्रसादजशब्दस्य न सर्वत्रान्वयः । ननु पुष्यन्ति त्वाहाररसादिना चरके रसेन रसपोषणमुक्तम् अत्र तु रसा-

अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रसादजः॥२१

द्रक्तमित्यादिना रसेन रक्तपोषणमुच्यते इति विरोधः। नैवमेक एवायमाहाररसो द्विप्रस्थानः पोष्यपोषकभेदेन। तत्रान्नपानादुत्पन्नो रसः पोषकः रक्तादिवत् स्थायी यः स पोष्यः तस्यैव हृदवस्थानमुक्तम्। अतएव पोष्यस्थायिरसव्यवच्छेदार्थमाहारेति रसविशेषणमुक्तं चरकेण। यत्तु रसाद्रक्तमित्यादिवचनं तद्रसत्वेनाभेदविवक्षया रसं परित्यज्य रक्तमेव पठितं न तु पोष्यस्य रसाख्यधातोरभावादिति। न चैवमष्टधातुकत्वं शरीरस्येति वाच्यम्। यतः स्थायिरसभागपोषकरसभागयोः स्थानभेदाग्निभेदाद्यभावादेकत्वमेवेति सप्तधातुकमेव शरीरमित्युच्यत इति। अत्र च रसाद्रक्ताद्युत्पादे केचिदिदं वदन्ति। यद्रसोऽग्निपच्यमानः सर्वात्मना रक्ततां याति रक्तञ्च मांसतामित्यादि पूर्वपूर्वधातुपरिणामेन उत्तरोत्तरधातूत्पादो यथा सर्वात्मना क्षीराद्दधि भवति दध्नो नवनीतं नवनीताद्घृतं घृताच्च घृतमण्ड इत्येकः पक्षः। किं वा रस एव रक्तं प्रथमं प्लावयति तत्र रक्तस्थानसम्बन्धात् रक्तसादृश्यं रक्तव्यपदेशश्चानुभवति। रक्तञ्च रक्तसमानेन स्तोकेनांशेनास्रं पोषयति। ततो रक्तमाप्लाव्य मांसमाप्लावयति तत्रापि मांससमानेनांशेन मांसपोषणं करोति। मांससादृश्यं मांसशब्दाभिधेयतां चानुभवति। एवमुत्तरोत्तरधातून् रस एव प्लावयति। यथा केदारनिषिक्तं कुल्याजलं प्रत्यासन्नां केदारीमाप्लावयतीति द्वितीयः पक्षः। एतदेवोक्तं हारीते। यद्रसः सप्ताहादर्वाक् परिवर्त्तमानः श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरिवर्त्ताद्वर्णपरिवर्त्तमापद्यमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यत इति। तथा सुश्रुतेऽपि तत्रैषां धातूनामित्यादिना तथा स खलु त्रीणि

श्रोणि इत्यादिना रसेनैव रक्तादिधातुपोषणमनेन न्यायेनोक्तम्। किं वा आहाररस उत्पन्नो भिन्नैरेव मार्गैः स्थायिरसरुधिरमांसादीन् रसरुधिरादिसमानांशेन तर्पयति। तत्र यः प्रत्यासन्नो धातुस्तत्पोषको भागस्तच्छीघ्रं पुष्णाति। यस्तु विदूरधातुस्तस्य सूक्ष्मविदूरमार्गतया चिरेण पोषणं भवति। एवं भिन्नैरपि मार्गैर्धातुपोषणं भवति तेन रक्तपोषणकालादुत्तरकालं मांसपोषको रसभागो मांसं पोषयति। तथा मांसपोषणकालादुत्तरकालं मेदःपोषको रसभागो मेदः पोषयतीत्यादि। तेन रसाद्रक्तमित्यादिवचनस्यायमर्थो यद् यत् रसपुष्टिकालादुत्तरकालं रक्तं प्रवर्त्तते रक्तपुष्टिकालादुत्तरकालं मांसं प्रवर्त्तत इत्यादि। अस्मिंस्तु पक्षे

विसृष्टमाहारमलः सारः प्रागीरितो रसः।
स तु व्यानेन निक्षिप्तः सर्वान् धातून् प्रतर्पयेत्॥

इत्यादिवचनस्य मुख्यार्थमेव घटते। तेन यथा खले उपचितानां कपोतानां भिन्नदिग्गामिनां स्वीयस्वीयमार्गेणैव गच्छतां गम्यदेशस्य प्रत्यासन्नत्वविप्रकृष्टत्वादिभेदेन शीघ्रं चिरेण गमनं भवति तद्वदिति क्षीरदधिन्यायकेदारीकुल्यान्यायः। खले कपोतन्यायात्त्रिधा धातुपोषणक्रमः। तत्र एतेषु पक्षेषु सर्वात्मपरिणामे त्रिचतुरोपवासेनैव देहस्य नीरसत्वं स्यात्। मासोपवासाच्च शुक्रमयं शरीरं स्यादित्युपेक्षणीय एव प्रथमः पक्षः। केदारीकुल्यान्यायपक्षे तु रसाद्रक्तादिपोषणं मुख्यार्थतया भवति। यद्यपि रक्तादेर्मांसादिपोषणं तदपि रसादेव रक्तादिधर्मतया रक्तादिव्यपदेशभाजो भवन्तीति व्युत्पादितमेव। यत्तु रसस्य सर्वधातुपोषकत्वमुक्तं तदपि रक्तादिपोषकतया तथा हृदयस्थायिरसस्य कृत्स्नदेहव्यापकतया वोपपन्नम्। एवं चरकेऽप्युक्तम्।

**रसात् स्तन्यं तथा रक्तमसृजः कण्डराः शिराः।**

व्यानेन रसधातुर्हि विक्षेपोचितकर्म्मणा।
युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा॥

इत्यादि। तदप्युक्तन्यायात् एवोपपन्नं यदपि मांसादिना समानेन मांसादेरेव पोषणम्। तदपि धात्वाप्लावनन्यायेन गच्छतापि रसेन तद्धातुसमानेनांशेन तद्धातुपोषणादुपपन्नम्। वृष्यन्तु प्रभावात् यथा खले कपोतन्यायेन विदूरमपि शुक्रं प्रभावात् शीघ्रं याति तथात्रापि शीघ्रमेव वृष्योत्पन्नो रसो रक्तादिधातून् शीघ्रमाप्लावयतीति सुघटम्। एवमनया दिशाप्यत्र दूषणमुद्धार्य्यम्। तेनायं पक्षस्तावत् साधुः। खले कपोतपक्षेऽपि यथा रसाद्रक्तमित्यादि गौणतया भवति तद्दर्शितमेव। यत्तु चरके विबद्धमार्गत्वान्मांसादीन् प्रपद्यत इत्युक्तं तत् कृत्स्नदेहचारिशोणिताभिप्रायेण न तु पोषकरक्ताभिप्रायेणेति व्यवस्थाप्यते। यत्तु एकैकस्मिन् धातौ त्रीणि त्रीणीत्यादिना धातौ अवस्थानकाल उक्तः। स पूर्वपूर्वरक्तादिधातुलङ्घनकालो विदूरगामिरसस्येति व्यवस्थाप्यते। एवमनयोः पक्षयोर्महाजनपरिगृहीतयोर्गतिरुपदर्शिता स्वरसस्तु अस्माकं केदारीकुल्यान्याये। यत्तु अन्यैः खले कपोतन्यायस्वीकारेण चरके सन्ततज्वरस्य द्वादशाश्रयत्वं युक्तमित्याद्युक्तम्। तन्न बुद्ध्यामहे। येन सन्ततस्य द्वादशाश्रयत्वं दोषमहिम्ना कृत्स्नदेहव्यापकतया। यथा धातु तथा मूत्रं पुरीषञ्चानिलादय इत्यादिनोक्तम्। दोषाणाञ्च कुपितानां सम्प्राप्तिविशेषात् किमगम्यमस्ति देहे येन यावद्रसमेव परं सर्वधात्वादिव्यापकं सर्वधातुदूषणेऽपीच्छन्त इति॥ २१॥

सम्प्रति प्रसादजन्यतां धातूनामभिधाय उपधातूनामप्याह रसादिति। अत्रापि रसात् स्तन्यं प्रसादजमित्यादि योज्यम्।

**मांसाद्वसास्त्वचः षट् च मेदसः स्नायुसन्धयः ॥२२॥**

रक्तमिति स्त्रीणां रजःसंज्ञं रक्तमप्युपधातुरूपम्। रसादेव रक्तं प्रसादभागजन्यमित्यर्थः। उक्तञ्च सुश्रुते।

रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रपद्यते।

इति। एतच्च रजोरूपं रक्तरसजन्यमपि धातुशोणितवत् न शीघ्रं जायते किन्तु शुक्रवन्मासेनैव। तदुक्तं सुश्रुते। एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्च आर्त्तवमिति। अन्ये तु

घृतकुम्भो यथैवाग्निमाश्रितः प्रविलीयते।
विसर्पत्यार्त्तवं पुंसां तथा स्त्रीणां समागमे॥

इत्यत्र यथा आर्त्तवशब्देन शुक्रमुच्यते तथा स्त्रीणाञ्च आर्त्तवमित्यत्रापि आर्त्तवशब्दः शुक्र एव वर्त्तते न तु रजसि। रजो हि रसाद्रक्तवत् शीघ्रमेव जायते न तु मासेन इत्याहुः। तन्नेत्यन्ये। विसर्पत्यार्त्तवमित्यादावपि स्त्रीणामार्त्तवं पुंसां समागमे सति विसर्पतीति योजनया आर्त्तवशब्दस्य रजोवचनत्वेनाप्युपपत्तेः। वस्तुतस्तु। आर्त्तवस्य रक्तरूपतया यद्यपि मासादर्वाग्भवति तथापि तस्यार्त्तवरूपता गर्भाशयप्राप्त्यैव भवति। गर्भाशयप्राप्तिस्तु मासेनैव भवतीति कृत्वा मासेनार्त्तवं भवतीति सुश्रुततेनोक्तम्। उक्तं हि विश्वामित्रेण

सूक्ष्माः केशप्रतीकाशा वीजरक्तवहाः शिराः।
गर्भाशयं पूरयन्ति मासाद्वीजाय कल्पते॥

इति। तत्र वीजभूतरक्तं वीजरक्तमार्त्तवमित्यर्थः। असृजः कण्डरा इति स्थूलस्नायवः। मेदसः स्नायुसन्धय इत्यनेन तु मेदसःसूक्ष्मा स्नायुपोषणमिति ज्ञेयम्। चरके हि कण्डराशब्दः स्थूलस्नायुवाची। सुश्रुते च स्थूलशिरावाचीति ज्ञेयम्। एते च स्तन्यादयः शरीरधारका अपि उपधातुशब्देनैवोच्यन्ते। तत्तु

**किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृज:।**
**पित्तं मांसस्य खमला मल: स्वेदस्तु मेदस:॥**

धातुशब्देन धातुशब्दप्रवृत्तेर्धारणपोषणनिमित्तत्वात्। तेन ये शरीरं धारयन्ति धातूंश्च पुष्णन्ति रसादयस्त एव मुख्यतया धातुशब्दवाच्या न स्तन्यादय: ते हि शरीरं धारयन्त्येव न तु किञ्चित् पुष्णन्ति। उक्तं हि भोजे।

शिरास्नायुरजस्तन्यस्त्वचो गतिविवर्जिता:।
धातुभ्यश्चोपजायन्ते तस्मात्ते उपधातव:॥

इति। अत्र गतिविवर्जिता इत्यनेन धात्वन्तरपोषणाख्या गतिर्निषिध्यते। अतएव धातुभ्यश्चोपजायन्त एव न तु परं जनयन्तीत्यर्थ:। यत्तु किञ्चिद्दोषप्रशमनं किञ्चिद्धातुप्रदूषणमित्यत्र धातुशब्देन दोषाणामपि ग्रहणम्। तद्गौणधातुशब्दप्रयोगाज्ज्ञेयम्। उक्तं हि दोषा ह्यपि धातुसंज्ञां लभन्ते इति। शुक्रस्याप्योज:पोषकतया धारणपोषणयोगोऽस्तीति धातुत्वमखण्डितमेव। ओजस्तु यद्यपि न धातुषु नाप्युपधातुषु पठितं तथापि तत् सप्तधातुसाररूपतया सप्तधात्वन्तर्गतमेवेति ज्ञेयम्। अतएव तस्याग्निरपि पृथङ्नोक्त:॥ २२॥

प्रसादभागोत्पादनमभिधाय मलभागोत्पादनमाह किट्टमिति। रसस्य तु कफ इति रसात् स्वाग्निपच्यमानात् य: किट्टभाग इति मलभाग: स कफ: प्रसादजश्च रक्तं न तु रसोत्पत्तिमात्र एव कफो जायत इति। एवं रक्तादिमलेऽपि ज्ञेयम् मांसस्य खमला इति कर्णनासास्यप्रजननादिस्रोतोमला:। स्यात् किट्टं कुशलोमास्थ्न इति। अत्र नखस्याप्यस्थिमलत्वं सुश्रुतप्रामाण्यादुन्नेयम्। तत्र हि नखा अप्यस्थिमलत्वेनोक्ता:। अतएव बहुधा शीतपीतीये चरकेऽप्युक्तम् किट्टात् केशनखादय:

स्यात्किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट्त्व-
चाम्॥२३॥
प्रसादकिट्टधातूनां पाकादेवं द्विधर्च्छतः ॥ २४ ॥
परस्परोपसंस्तम्भा धातुस्नेहपरम्परा ॥ २५ ॥

पुष्णन्ति इति। यत्तु शरीरे अस्थिगणनायां विंशतिर्नखा गणिताः तदस्थिसाम्येनोक्तम्। किं वा जीवन्नखस्यास्थित्वं मृत-नखस्य तु मलत्वं ज्ञेयम्। अत्र केचिदाकृष्टाण्डकोषस्य पुंसः श्मश्रुणोऽभावात् श्मश्रूणि शुक्रमलतया वदन्ति। तन्न तन्त्वे ऽनभिधानात् श्मश्रुहीनस्यापि शुक्रदर्शनाच्च। मज्ज्ञः स्नेहो-ऽक्षिविट्त्वचामिति स्नेहस्त्वचामित्यन्वयः। अक्षिविडिति दूषिका। अत्र मलस्थूलानुभागविशेषेण त्रिविधं परिणामं वर्ण-यन्ति केचित्। यथा रसादग्निपक्वात् मलं कफः स्थूलभागो रसः सूक्ष्मभागश्च रक्तम्। तथा रक्तादग्निपच्यमानात् मलं पित्तं स्थूलभागः शोणितं सूक्ष्मभागस्तु मांसमित्यादि उप-संहरति ॥ २३ ॥

धातूनां पाकादेवमुक्तक्रमेण प्रसादकिट्टे द्विधा ऋच्छतो भवत इत्यर्थः ॥ २४ ॥

इदानीं यथा पोषकेण रसादिना पोष्यस्य रक्तादेराप्यायनं क्रियते तथा पोष्येणापि रक्तादिना पोषकस्यापि रसादेरा-प्यायनं क्रियत इति परस्परधातूनामुपकारकत्वमाह। पर-स्परमुपस्तम्भः सन्तर्पकत्वं यस्याः सा तथा। धातुस्नेहपरम्परा धातुरूपसारपरम्परा। अतएवातिव्यवायेन पोष्यस्य शुक्रस्य क्षयादपि पूर्वपूर्वपोषकधातुक्षयो य उक्तस्तन्त्रान्तरे स उपपद्यते

अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः ।
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकः ॥२६॥
तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ।
पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥२७॥
यो हि भुङ्क्ते विधिं मुक्त्वा ग्रहणीदोषजान् गदान् ।
स लौल्याल्लभते शीघ्रं तस्मान्नोलङ्घयेद्विधिम् ॥२८॥
प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ।
वर्णप्रसादसौस्वर्य्यं जीवितं प्रतिभा सुखम् ॥
तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् ।

इति ज्ञेयम् । एवमुक्तमग्नीनां कर्मोपसंहरति । इति भौतिकधात्वनुरूपपक्तॄणां कर्म भाषितम् ॥ २५ ॥

भौतिकाः पञ्च धात्वग्नयः सप्त अन्नस्य पक्तैकस्त्रयोदश । एषु एव जाठराग्नेः प्राधान्यमाह अन्नस्येति । हि यस्मात्ते द्वादशाग्नयस्तस्य जाठराग्नेर्वृद्ध्या वृद्ध्यात्मका वृद्धिरूपाः । तथा क्षयेण च क्षयात्मका हि यस्मात्ते द्वादशाग्नयः क्षीणस्वरूपा भवन्ति । तस्माज्जाठरानलान्वयव्यतिरेकोऽनुविधायित्वात्तन्मूला इत्यर्थः ॥ २६ ॥

तस्मात्तं पालयेदिति योज्यम् । विधिवद्युक्तैरिति यथाविध्युपयुक्तैः । विधिश्च दर्शित एव ॥ २७ ॥

उक्तविधिविपर्य्यये दोषमाह यो हीत्यादि ॥ २८ ॥

इदानीं यथाविध्युपयुक्तस्यान्नस्य गुणमाह प्राणा इत्यादि । अभिधावति प्रार्थयते । किं वा अन्नमित्यनन्तरमुद्दिश्येति शेषः । प्रतिभा प्रज्ञा । लौकिकमिति अपरोक्षकलोकभवम् अपरोक्षका

लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् ॥
कर्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ॥२८॥

---

शीतोष्णतोयासवमद्ययूष-
फलाम्लधान्याम्लपयोरसानाम्।
यस्यानुपानन्तु हितं भवेद्य-
त्तस्मै प्रदेयं त्विह मात्रया तत् ॥ १ ॥
व्याधिञ्च कालञ्च विभाव्य धीरै-
र्द्रव्याणि भोज्यानि च तानि तानि ॥२॥

एव हि वर्त्तमानमात्रे प्रवर्त्तन्ते। परीक्षका[illegible]तु जन्मान्तरोपकारिष्वेव प्रवर्त्तन्ते प्रायः कर्म यद्वृत्ता[illegible] वर्त्तमाने साध्ये यत् कर्म कृष्यादि स्वर्ग[illegible] स्वर्गम[illegible] [illegible]मिति यज्ञादि। अपवर्ग इति मोक्षे। एताश्च निमित्त[illegible]ः। यच्चोक्तमिति। मोक्षशास्त्रे सत्यब्रह्मचर्य्यादि। अन्ने प्रतिष्ठितमिति। अन्ननिबन्धनदेहस्थित्यभावेन सर्वारम्भाभावात्। तस्माद्यथोक्तविधिना अन्नं सेव्यमित्यर्थः ॥ २८ ॥

इति आहारविधिः।

---

आहारानन्तरं हि सुखपाकार्थमनुपानं प्रयुज्यत इत्यनन्तरमनुपानमाह। तत्र सर्वाण्येवानुपानद्रव्याणि उत्तरत्र विवरीतुं संक्षेपेण सूत्रयन्नाह शीतेत्यादि। फलाम्लं वीजपूरादि। धान्याम्लं काञ्जिकादि। पयःशब्दस्तद्विकारयोर्वक्ष्यमाणयोर्मस्तुतक्रयोरपि ग्राहकः। इक्षुरसस्तु रसशब्देन गृह्यते ॥ १ ॥

स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसं पयः ॥ ३ ॥
उष्णोदकानुपानन्तु स्नेहानामथ शस्यते ।
ऋते भल्लातकस्नेहात्तत्र तोयं सुशीतलम् ॥ ४ ॥
अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिकम् ॥ ५ ॥

शीतोष्णतोयादिषु मध्ये यदनुपानं यस्मै हितं भवेत्तस्मै तदेव देयम् । कथमित्याह । व्याधिं ज्वरादिकं तथा व्याधिशब्देन व्याधिहेतवो वातादयोऽपि गृह्यन्ते उपचारात् । एतन्न सङ्गतमित्यन्ये । युगपद्वृत्तिद्वयापत्तिप्रसङ्गात् । कालमार्त्तवमावस्थिकञ्च । द्रव्याणि द्रवप्रधानानि स्नेहादीनि । भोज्यानि शूकधान्यादीनि । विभाव्येति विशेषेण ज्ञात्वा न सामान्यरूपेण अवधार्य्य इत्यर्थः ॥ २ ॥

सामान्येनानुपानमभिधाय विशेषेणानुपानेऽभिधातव्ये प्रथमं दोषविशेषेऽनुपानविशेषमाह स्निग्धोष्णमित्यादि ॥ ३ ॥

दोषभेदेनानुपानभेदमभिधाय द्रव्यभेदेनानुपानभेदे वक्तव्ये शीतोष्णतोययोः प्रथमं सूत्रितत्वात् प्रथमं तयोर्विषयमाह उष्णोदकेत्यादि ॥ ऋते भल्लातकस्नेहादिति उष्णोदकानुपानस्यापवादः । तत्र तोयं सुशीतलमित्यस्य स्थाने स्नेहात्तौवरिकात्तथेति केचित् पठन्ति । तत्र

पत्रैस्तु केशराकारैः फलैः सर्षपसन्निभैः ।
वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः ।

तेन तुवरकफलोद्भवः स्नेहस्तौवरक इत्यर्थः । तेन भल्लातकस्नेहे तौवरस्नेहेऽप्युष्णजलस्य निषेधाच्छीतजलानुपानमर्थलब्धमेव ॥ ४ ॥

शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः।
दधिपायसमद्यार्त्ते विषदुष्टे तथैव च ॥ ६ ॥
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ७ ॥
पयोमांसरसो वापि शालिमुद्गादिभोजिनाम्।
युद्धाध्वातपसन्तापविषमद्यरुजासु च ॥ ८ ॥
मांसादेरनुपानन्तु धान्याम्लं दधि मस्तु वा ॥९॥
अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः।
मद्यमांसोचितानान्तु मद्यमेवानुशस्यते ॥
अमद्यपानामुदकं फलाम्लं वा प्रयोजयेत् ॥१०॥

स्नेहप्रसङ्गेनैकीयं मतं तैलानुपाने दर्शयन्नाह अनुपानमित्यादि। अत्र यूषाम्लकाञ्जिकमिति उष्णकाले यूषः। शीतकाले काञ्जिकमित्याहुः ॥ ५ ॥

पिष्टान्नेविदाहरक्षार्थं पायसेऽपि गुरुत्वाद्विदाहरक्षार्थं शीतजलानुपानम् ॥ ६ ॥

सुखोदकमिति कदुष्णमुदकम् ॥ ७ ॥

अत्र यदाहारगुणैः पानं विपरीतं तदिष्यत इति वचनात् शालिषु पयसः समानगुणस्यानुपानत्वं न मन्यमानाः केचित् पयःस्थाने मस्तु पठन्ति। तत्तु न मनोरमम्। यतः शालिषु पयोऽनुपानं शालिप्रभावादेव वचनादुन्नीयते। नहि सर्वत्रानुपाने कारणवर्णनं सुगमम् ॥ ८ ॥

धान्याम्लन्तु काञ्जिकम्। दधिमस्तु यद्यपि शीतोष्णतोयासवमद्य इत्यादिवचने पूर्वं सूचितं तथापि तत्र पयोग्रहणस्य गोरसोपलक्षणत्वात् लभ्यते इति प्रागेवोक्तम् ॥ ९ ॥

उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः।
क्लान्तानामनुपानार्थं पयः पथ्यं यथामृतम् ॥
सुरा कृशानां स्थूलानामनुशस्तं मधूदकम् ॥११॥
निरामयानां चित्रन्तु भक्तमध्ये प्रकीर्त्तितम् ॥१२॥
क्षीरमिक्षुरसश्चेति हितं शोणितपित्तिनः ॥१३॥
अर्कशेलुशिरीषाणामासवस्तु विषार्त्तिषु ॥ १४ ॥
यदाहारगुणैः पानं विपरीतं तदिष्यते।
तच्चानुपानं धातूनां दृष्टं यन्न विरोधि च ॥१५॥

फलाम्लं दाड़िमादि ॥ १० ॥

कृशानां सुरा अनुशस्ता। स्थूलानान्तु मधूदकमनुशस्तमिति सम्बन्धः। मधुमिश्रितमुदकं मधूदकम् ॥ ११ ॥

सुस्थमधिकृत्यानुपानमाह निरामयाणामित्यादि। चित्रमिति नानाप्रकारं येन नानाप्रकारा दोषधातुमलाः स्वमानमनुवर्त्तन्ते। सामयानान्तु अनुपानं वातादिदोषापेक्षयैव देयम्। तच्च स्निग्धोष्णं मारुते शस्तं इत्यादिना प्रागेवोक्तम् ॥ १२ ॥

शीतोष्णतोयेत्यादिसूत्रे इक्षुरसस्यापि रसशब्देनाभिधानात्। इक्षुरसोऽपि अनुपाने सूचित इति तदभिधानम् नोत्सूत्रम् ॥ १३ ॥

विषार्त्तिषु देयमनुपानमाह अर्केत्यादि ॥ १४ ॥

अनुक्तानुपानज्ञानार्थमाह यदाहारेत्यादि ॥ आहारगुणैरिति शीतस्नेहमधुरादिभिः। विपरीतमिति विपरीतगुणमनुपेयम्। एवञ्च दध्नोऽम्लस्य मधुरं क्षीरं तथा पायसस्य च। काञ्जिकाद्यनुपानं स्यादित्यत आह। धातूनां यन्न विरोधि

दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा।
यथोक्तेनानुपानेन सुखमन्नं प्रजीर्य्यति ॥ १६ ॥
रोचनं बृंहणं वृष्यं दोषघ्नं वातभेदनम्।
तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥
दीपनं दोषशमनं पिपासाच्छेदनं परम्।
बल्यं वलकरं सम्यगनुपानं सदोच्यते ॥ १७ ॥
तदादौ कर्षयेत्पीतं स्थापयेन्मध्यसेवितम्।
पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥१८॥

चेति। एवं दध्यादिषु अन्नेषु क्षीराद्यनुपीयमानं धातुविरोधमावहतीति न तदनुपानमित्यर्थः। एवमन्यदपि विरुद्धमुन्नेयम् ॥ १५ ॥

अनुपानगुणमाह दोषवदित्यादि। दोषवदिति वातादिदोषकरम्। गुर्विति स्वभावगुरु लड्डुकपिष्टकादि। मात्रागुरोस्तु अतिमात्रपदेन निर्दिष्टत्वात् ॥ १६ ॥

पुनः प्रशस्तं गुणमाह रोचनमित्यादि ॥ १७ ॥

अनुपानस्य भोजनादिमध्यान्तविभागेन गुणविशेषमाह-तदादावित्यादि। आदौ पीतं वायुना अधोगतेन रूक्षीकृतम् आहाराकाङ्क्षाविरोधकतया च देहं कर्षयति। एतच्च यद्यपि कस्यचित् पश्चाच्च भवतीत्यतोऽनुपानार्थो न घटते अनुशब्दस्य पश्चादर्थत्वात् तथापि पानस्य सर्वकालिकत्वात् उपन्यस्तम्। किं वा अनुशब्दो लक्षणार्थः। तेन भाविभोजनं तृष्णाश्चानु लक्षीकृत्य पीयत इत्यनुपानमित्यर्थः। स्थापयेन्मध्यसेवितमिति। भोजनमध्ये सेवितमनुपानं पित्तस्य स्नेहेन

स्थिरतां गतिमक्लिन्नमन्नमद्रवपायिनाम् ।
भवत्याबाधजननमनुपानमतः पिबेत् ॥ १९ ॥
न पिबेत् श्वासकासार्त्तो रोगे चाप्यूर्द्धजत्रुगे ।
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥२०॥
पीत्वाध्वभाष्याध्ययनस्वप्नगेयान्न शीलयेत् ।
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ॥
स्यन्दाग्निसादच्छर्द्यादीन् जनयेदामयान् बहून्॥२१
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ २२ ॥

---

युक्तं सत् शरीरं समं स्थापयति । पश्चात् पीतञ्च श्लेष्मघ्नप्रसङ्गात् स्निग्धतरं सद्वृंहयति । वीक्ष्य प्रयोजयेदिति कर्षणादिकार्य्यमपेक्ष्य प्रयोजयेदित्यर्थः ॥ १८ ॥

अनुपानाभावे दोषमाह स्थिरतामित्यादि ॥ १९ ॥

विषयविशेषेऽनुपाननिषेधमाह न पिबेदित्यादि । अत्र केचिद्द्रवं विना जारणाभावात् नञश्च ईषदर्थत्वात् अल्पं पिबेदित्यर्थं वदन्ति ॥ २० ॥

द्रवं पीत्वा यत्र कार्य्यं करणे वा यो दोषस्तमाह । कण्ठोरसि स्थितमिति अध्वादिक्षोभितवातेनोर्द्धं नीतत्वात् । स्यन्दः कफप्रसेकः ॥ २१ ॥

अनुपानमात्रामाह अनुपानमित्यादि ॥ २२ ॥

इति अनुपानविधिः ।

---

अत ऊर्द्धं प्रवक्ष्यामि गुणानां कर्मविस्तरम्।
कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥१॥
ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्क्लेददाहजित्।
उष्णस्तद्विपरीतः स्यात्पाचनश्च विशेषतः ॥ २ ॥
स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा।
रूक्षस्तद्विपरीतः स्याल्लेखनः स्तम्भनः खरः ॥ ३ ॥
पिच्छिलः पीड़नो बल्यः सन्धानः श्लेष्मलो गुरुः॥४
विशदो विपरीतः स्यात् क्लेदाद्यपरोपणः ॥५॥
दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा ॥ ६ ॥

अनुपानादौ प्रतिपादिता ये गुणास्ते हेयोपादेयकार्य्यकर्तृतयैव हेया उपादेया वा तेषाञ्च कार्य्यं कथं ज्ञातव्यमिति जिज्ञासायां गुणानां कर्माभिधातुं प्रकरणान्तरमारभते। अत ऊर्द्धमित्यादि। कर्मेति कार्य्यं कार्य्यावच्छिन्ना वा क्रिया। यद्यप्यत्रापि शीतपिच्छिलादयः प्रत्यक्षास्तथापि ते तत्कार्य्यकर्तृतया अनुमेया एवेति कर्मभिस्त्वनुमीयन्त इत्युक्तम्। नाना च ते द्रव्याश्रयाश्चेति नानाद्रव्याश्रयाः ॥ १ ॥

ह्लादनः सुखकारक इत्यर्थः। स्तम्भनो रक्तातिप्रवृत्त्यादीनाम्। शीत इति शीतगुणः। पाचनो व्रणस्य आमस्य ॥२॥

खर इति खरत्वं कार्कश्यं तत्कर इति। ३ ॥

पीड़न इति व्रणपीड़नः ॥ ४ ॥

क्लेदाद्यपरोपण इति क्लेदहारकः ॥ ५ ॥

स्रावण इति व्रणनयनस्रावणः। मृदुरन्यथेति तीक्ष्णविपरीतकर्मेत्यर्थः ॥ ६ ॥

सादोपलेपबलकृत् गुरुस्तर्पणबृंहणः ॥ ७ ॥
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा।
दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तन्निबोध मे ॥८॥
द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद् बन्धकारकः॥९॥
श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा॥१०
सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ॥११॥
दुर्गन्धो विपरीतोऽस्मात् हृल्लासारुचिकारकः॥१२॥

सादोऽग्निसादः ॥ ७ ॥

कर्म इति ल्यब्लोपे पञ्चमी। तेन कर्म पुरस्कृत्य प्रोक्ता इत्यर्थः। तेषां गुणानां मध्ये विशिष्टैः कर्मभिरन्यान् दश प्रवक्ष्यामीत्यर्थः ॥ ८ ॥

सान्द्र इति सान्द्रगुणः। बन्धो मेलक उपचय इति यावत् तत्कारकः। केचित्तु

द्रवः प्रक्लेदनो व्यापी शुष्कः स्याद् बन्धकारकः।

इति पठन्ति। तत्र शुष्क इति शुष्कगुण इत्यर्थः ॥ ९ ॥

सुगन्धगुणमाह सुखानुबन्धीत्यादि। सुखानुबन्धी सुखजनकः। सूक्ष्म इत्यवगाहकः। शोभनो गन्धः सुगन्धः ॥ ११ ॥

विपरीत इति दुःखानुबन्धी। तथा नैव पुरुषमवगाहते अनभिलषितत्वात्। सुगन्धवैपरीत्येनैवारुचौ लब्धायां पुनस्तद्वचनं द्विविधारुचिप्रापणार्थम्। द्विविधो हि अरोचकः। तत्रैकः अनन्नाभिलाषरूपः। द्वितीयस्तु सत्यपि अभिलाषे अव्यवहारासामर्थ्यरूपः ॥ १२ ॥

सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः ॥१३
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्प्यते॥१४
विकासी विकसन्नेवं धातुबन्धान् विमोचयेत् ॥१५
आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् ॥१६॥
सूक्ष्मस्तु सौक्ष्म्यात्सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः।
गुणा विंशतिरित्येवं यथावत्परिकीर्त्तिताः ॥१७॥

अनुलोमन इति। विगुणवायुमलादेः प्रवर्त्तनः। यात्राकर इति स्थैर्य्याद्देहस्थिरकारकः ॥ १३ ॥

व्यवायी गुणः अपक्क एव मद्यविषवत् प्रथममखिलं देहं व्याप्नोति ततस्तत्रस्थ एव पाकं याति। येऽपि भावाय इति पठन्ति, तत्रापि भावाय शरीरस्थितये भवतीत्यर्थः। अन्ये तु भावाय कल्प्यत इत्यस्य स्थितये कल्प्यते नोर्द्ध्वमधो वा यातीत्याहुः। अपरे तु भावशब्दमभिप्रायार्थमिच्छन्ति। तत्र नियतद्रव्यप्रभावेणात्मशक्त्यनुरूपं तत्तद्द्रव्यं मद्यविषवत् विशिष्टाभिप्राय कल्प्यत इत्यर्थमाचक्षते ॥ १४ ॥

विकसनं विकासो हिंसासहिता गतिः कसगतिशातनयोरित्यस्य रूपं सोऽस्यास्तीति विकासी विकसन्निति गच्छन्। धातुबन्धानिति धात्वन्तरमर्य्यादारूपावकाशात् रसादीन् धातुबन्धान् विमोचयेदिति धात्ववस्थितान् दोषमलान् पृथक्करोतीति ॥ १५ ॥

आशुकारी गुणः आशुत्वादिति शीघ्रगतित्वात् ॥ १६ ॥

सरविशेषो व्यवायी तीक्ष्णविशेषो विकासी तेन विंशतिगुणा इत्युपसंहारो युक्त एव। अन्ये तु संख्याधिक्यभिया व्यवायिविकासि गुणौ न पठन्ति तत्र व्यवायिविकासिनोः स्वतन्त्रे

दन्तकाष्ठं करञ्जादि रुचिदं दन्तशोधनम् ॥१८॥
जिह्वा निर्लेखनं वक्त्रजिह्वावैरस्य जाड्यजित्।
देवगोविप्रवृद्धानां गुरूणामपि पूजनम् ॥
आयुष्यं वृद्धिदं पुण्यमलक्ष्मीकविनाशनम्।
मङ्गल्योपासनं शस्तं वृद्धिदं व्यसनापहम् ॥
पादप्रक्षालनं पादमलरोगश्रमापहम्।
दृष्टिप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम् ॥
नेत्रमञ्जनसंयोगात् भवेच्चामलतारकम्।
लाघवं कर्मसामर्थ्यं स्थैर्य्यं क्लेशसहिष्णुता ॥
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते।
वातपित्तामयी बालो वृद्धोऽजीर्णी तु तां त्यजेत् ॥
मेदोहरः स्थैर्य्यकरो गौरवव्याधिनाशनः।
अभ्यङ्गो मार्दवकरो वातश्लेष्मविनाशनः ॥
उद्वर्त्तनं स्थिरकरं कफमेदोविनाशनम्।
स्नानं दीपनमायुष्यं वृष्यं स्वर्य्यं बलप्रदम् ॥

परतन्त्रे च पाठात्। अन्ये तु दशैवान्यान् प्रवक्ष्यामीत्यत्र दश चान्यानिति पठित्वा चकारस्यानुक्तसमुच्चयार्थत्वेनाधिकगुणद्वय-पाठं समर्थयन्ति। इति गुणकर्म्मनिर्देशः ॥ १७ ॥

इदानीं पारिशेष्याद्दन्तकाष्ठादिगुणमाह दन्तकाष्ठमित्यादि। आदिशब्दात् करवीरादीनां ग्रहणम्। तदुक्तं

करञ्जकरवीरार्कमालतीककुभाशनाः।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ॥ इति ॥१८॥

कण्डूमलकफस्वेदतन्द्रातृड्दाहपाप्मजित्।
उष्णाम्बुनाधः कायस्य परिषेको बलावहः॥
तेनैव तूत्तमाङ्गस्य बलकृत्केशचक्षुषोः।
आलेपनं वृष्यतरं बल्यं दुर्गन्धपाप्मजित्॥
वासोनवं निर्मलञ्च श्रीमत्पारिषदं शुभम्।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम्॥
रजोवश्यायसूर्य्यांशुहिमानिलनिवारणम्।
प्रतिश्यायशिरःशूलहरञ्चोष्णीषधारणम्॥
ईतेर्विधमनं बल्यं गुप्त्यावरणशङ्करम्।
घर्मानिलरजोम्बुघ्नं छत्रधारणमुच्यते॥ १८॥
स्खलतः सम्प्रतिष्ठानं शत्रूणाञ्च निवारणम्।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम्॥
पादाभ्यङ्गस्तु चक्षुष्यो निद्राकृत्पादरोगहा।
संवाहनं मांसरक्तत्वक् प्रसादकरं परम्॥
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम्।
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम्॥
वृषताक्लीवताज्ञानमज्ञानं जीवितं न च॥ २०॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता।

ईतिरागामिदुर्दैवम्। गुप्तिः पिशाचादिभ्यो रक्षा॥ १८॥
न च जीवितं मरणमित्यर्थः॥ २०॥

सुखायुषोपरा कुर्य्यात्कालरात्रिरिवापरा ॥
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।
अरूक्षमनभिष्यन्दित्वासीनप्रचलायितम् ॥२१॥
आस्यावर्णबलश्लेष्मसौकुमार्य्यकरी सुखा।
तालवृन्तोद्भवं वातं त्रिदोषशमनं विदुः॥
वंशव्यजनजः सोष्णो वातपित्तप्रकोपणः।
चामरो वस्त्रवातश्च मायूरो नैत्रजस्तथा॥
एते दोषजिता वाताः स्निग्धा हृद्याः सुपूजिताः।
निवातमारोग्यकरं सुखवातं श्रमापहम्॥
प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपित्तनुत्।
प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन्॥
सन्निपातज्वरं श्वासमामवातञ्च कोपयेत्।
पश्चिमः शिशिरो हन्ति मूर्च्छां दाहं तृषां विषम्॥
प्राग्गुणो दक्षिणः प्रोक्त उत्तरः पश्चिमानुगः॥२२॥
विश्वग्वायुरनायुष्यः प्राणिनां नैकरोगकृत्।
धूमः पित्तानिलौ कुर्य्यादवश्यायः कफानिलौ॥
अग्निर्वातकफस्तम्भशीतवेपथुनाशनः।
आमाभिष्यन्दशमनो रक्तपित्तप्रकोपणः॥

आसीनस्य प्रचलायितं घूर्णितमित्यर्थः॥ २१॥
प्राग्गुण इति प्राग्वातगुणः॥ २२॥

आतपः कटुको रूक्षश्छाया मधुरशीतला।
ज्योत्स्ना कषाय मधुरा दाहासृक्पित्तनाशिनी॥
तमोभयावहं तिक्तं कुज्झटिः कफपित्तला॥२३॥
शीताभिष्यन्दिनी वृष्टिस्तन्द्रानिद्राबलप्रदा।
देशोधन्वामरुत्पित्तकरो रूक्षोष्ण एव च॥
आनूपस्तु हिमः स्निग्धो वातश्लेष्मकरो गुरुः।
साधारणः समगुणः सर्वरोगापहः स्मृतः॥
हेमन्तः शीतलः स्निग्धः स्वादुरग्नेश्च वृद्धिकृत्।
शिशिरः शीतलः किञ्चित् रूक्षस्तीक्ष्णोनिला-
ऽग्निकृत्॥
वसन्तस्तुवरः सोष्णकफव्याधिसमीरणः।
ग्रीष्म उष्णोऽतिरूक्षश्च कटुको बलहानिकृत्॥
वर्षाः शीताविदाहिन्यो वह्निमान्द्यानिलार्त्तिदाः
शरत्पित्तकफप्राया स्निग्धोष्णाशस्यवृद्धिकृत्॥
पूतिमांसं स्त्रियोवृद्धा बालार्कस्तरुणं दधि।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्॥
सद्योमांसं नवान्नञ्च बालास्त्रीक्षीरभोजनम्।
घृतमुष्णोदकञ्चैव सद्यः प्राणकराणि षट्॥

आतपादीनाञ्च कटुत्वादिकं यदुक्तं तत् कटुरसादितुल्य-
कार्य्यकर्तृत्वेन ज्ञेयम्॥ २३॥

सन्तताध्ययनं वादः परतन्त्रावलोकनम्।
तद्विद्याचार्य्यसेवा च बुद्धिमेधाकरो गणः॥
आयुष्यं भोजनं जीर्णे वेगानामविधारणम्।
ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्जनम्॥२४॥
तन्त्राणां सारमाकृष्य द्रव्याणां गुणसंग्रहः।
भिषजामुपकाराय रचितश्चक्रपाणिना॥ २५॥

वैद्यमहामहोपाध्याय श्रीमच्चक्रपाणिदत्तकृत द्रव्य-
गुणसंग्रहः समाप्तः।

---

इदानीमस्य संग्रहग्रन्थस्य उपादेयतां दर्शयितुमाह तन्त्राणा-
मित्यादि॥ २५॥

आसीत् सभायां शिखरेश्वरस्य लब्धप्रतिष्ठः किल सारसेनः।
वाणीविलासं कविसार्वभौमं विजित्य यः प्राप यशो दुरापम्॥
काकुत्स्थसेनस्तनयस्ततोऽभूत् तस्यापि लक्ष्मीधरसेननामा।
तस्मादभूदुद्धरणस्तनूजस्तस्याप्यनन्तस्तनयोऽथ जज्ञे॥
योऽन्तरङ्गपदवीं दुरापां छत्रमप्यतुलकीर्त्तिरवाप।
गौड़भूमिपतिरर्वाक् साक्षात्तत्सुतस्य कृतिनः कृतिरेषा॥
कृतिर्ममैषाखिलतन्त्रतत्त्वविद्भिश्चिकित्सकान्नोपकरोति यद्यपि।
तथापि नव्यान् भिषगल्पदृश्वनः परः सहस्रानानुकूलयिष्यति॥

इति शिवदाससेनकृतटीका समाप्ता।

---



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

PANDIT KULAPATI

JIBANANDA VIDYASAGARA, B. A.

Superintendent Free Sanskrit College, Calcutta